दाविवशाब्दानुपपत्तेश्च कथंचित्तदुपपादनेऽपि समवायस्यैक्येन गंधस्यनानात्वेनानु गतसम्बंधेन पृथिवीत्वापेक्षयाऽननुगतपरम्प रासम्बंधेनगुरुभूतेनचगंधत्वस्य गुरुत्वेनशक्यतानवच्छेदकत्वात्, अत एवसमवाय सम्बंधेनघटत्वापेक्षयापरम्परासम्बंधेन कम्बुग्री वात्वजातेर्गुरुत्वेन प्रतियोगितानवच्छेदकत्वादिति जगदीशलि खनमपिसंगच्छते, किंचनिर्गंधकिंशुकादौ पृथिवीपदशक्यतेनस म्बंधेन गंधत्वस्यासत्वेनन्युनवृत्तितया शक्यतानवच्छेदकत्वादि तिप्राहुः, ननुसत्ताजातौप्रमाणाभावात् पृथिवीत्वेनित्यवृत्तित्व साधकानुमानेदृष्टांता सिद्धिःनचघटस्सन् पटस्सनित्यादिप्रत्यय सद्भावस्य प्रमाणत्वादितिवाच्यं भावस्सन् जातिस्सतीत्या दि प्रयोगाणामपिसद्भावा दित्याशंकांनिषेधयति नचेति, नत्वि त्यर्थः तत्रानुमानप्रमाणसम्भवादित्याह गगनमिति,द्रव्यत्वमादा यार्थान्तरस्यसिद्धसाधनस्यवावारणाय द्रव्यत्वेतरेति, एतच्चाभे देनजातावन्वेति घटादेः पक्षत्वेघटत्वपृथिवीत्वमादायार्थान्तराप त्तेरितिगगनस्यपक्षतयोल्लेखः भूतत्वंचात्मभिन्नत्वेसतिविशेषगुण वत्वं अत्रसत्यन्तानुपादाने सुखादिसमवायिकारणतावच्छेदिका याआत्मत्वजातेः परमात्मन्यसत्वेन विशेषगुणस्यचतत्रसत्वेन त मादायव्यभिचारप्रसंगात् विशेष्यानुपादाने कालदिगन्तर्भावेण व्यभिचारः स्यादितितयोरुपादानं, गगनस्याभिन्नतयातत्रद्र व्यत्वव्याप्यजातेरभावादितिभावः[1] यत्तुप्रतियोगित्व सम्बधाव च्छिन्नध्वंसत्वावच्छिन्नकार्यतानिरूपित कारणतावच्छेदकतया[2]

---

[ १ ] एकव्यक्तिमात्रवृत्तित्वादाकाशत्वन्नजातिरिति, ।

[ २ ] जात्यादौप्रतियोगितया ध्वंसवारणार्थं प्रागभावा वृत्तिप्रतियोगितयाध्वं सम्प्रतितादात्म्येन सत्वेनकारणतेति, ।

सत्तासिद्धिरिति, तत्तुच्छं, तस्याः नित्यवृत्तितयाकारणतानव च्छेदकत्वात्[२] नचजन्यत्वविशिष्टस ।

मू० । नचसत्ताऽसिद्धिः, गगनंद्रव्यत्वेतरजातिमत् भूतत्वात् पटवदितितदनुमानात्, नचद्रव्यत्वासिद्धिः, गगनादिः रूपावृत्तिजातिमान् गुणवत्वात् घटवदितिद्रव्यत्वसिद्धिः ॥

त्वस्यतथात्वादितिवाच्यं नित्यानित्योभयसाधारणसत्त्वस्यासिद्धे, द्विविधसत्वस्य तत्रकाराभिप्रेतस्य क्वचिदप्यश्रुतत्वात्, नित्येतत्साधक प्रमाणाभावाच्चेतिदिक्, ननुद्रव्यत्वजातौप्रमाणाभावान्निरुक्तानुमानेसाध्यासिद्धिः घृतयत्तुप्रभृतिषुद्रव्यत्वाग्रहात्प्रत्यक्षमेव प्रमाणमितिवक्तुमशक्यत्वात् नचचक्षुस्संयुक्तघृतादिसमवेतत्वस्य सन्निकर्षस्य तत्रसत्वात्कथन्नतत्रप्रत्यक्षं प्रमाणमितिवाच्यं घृतादौद्रव्यत्वव्यवहाराभावेन प्रत्यक्षप्रतिबंधकानुपलब्धेस्तत्रसत्वादित्याह नचेति, द्रव्यत्वजातावनुमानमेव प्रमाणमित्याह गगनादिरिति, सत्तामादायार्थान्तरादिवारणाय रूपावृत्तीति, जातिविशेषणं, रूपनिरूपितसमवायसम्बधाव

---

[२] [टि० ] कालिकसमवायोभयसम्बन्धस्य कारणतावच्छेदकतावच्छेदकसम्बन्धत्व स्वीकारेपिध्वंसाननुयोगिककालिकसम्बन्धेन क्लृप्तघटत्वादेरेवकारणतावच्छेदकत्वसम्भवात्तस्यानिष्प्रामाणिकत्वादिति, ॥

च्छिन्न वृत्तित्वसामान्याभावार्थकं, संयोगैकत्वादिकमादायार्था न्तरवारणायजातीति, यत्तुकार्य्यसमवायिकारणतावच्छेदकत याद्रव्यत्व जातिसिद्धिरिति, तत्तुच्छं, समवायिकारणता निरू पितकार्य्यतावच्छेदकत्वस्यात्माश्रयभयेन कार्य्यत्वेवक्तुमशक्य त्वात्, ध्वंसेपितस्यसत्वेनातिप्रसक्तत्वाच्च, नचसंयोगसमवायि कारणतावच्छेदकतया तत्सिद्धिरितिवाच्यं विभुद्वयसंयोगस्वी कारपक्षे संयोगत्वस्यातिप्रसक्तत्वेन कार्य्यतानवच्छेदकत्वात्, यदिचविभागसमवायि कारणतावच्छेदकतयातत्सिद्धिरित्युच्य ते तदाद्रव्यत्वा विशेषेणकपालविभागस्य कपालइवतन्त्वादाव प्युत्पादभयेन तत्तद्व्यक्तिभेदेन कार्य्यकारणभावस्यावश्यकत्वे न सामान्यकार्य्यकारणभावस्या नावश्यकत्वात् द्रव्यत्वासिद्धे रिति, केचित्तु द्रव्यपदशक्यतावच्छेदकतयाद्रव्यत्व जातिस्सि ध्यति इदंद्रव्यंद्रव्यंपश्यतिद्रव्यमानयद्रव्यं निरूपयतीत्यादिप्र योगदर्शनात्, अथस्वाश्रयगुणसम्बन्धेन गुणत्वमेवतत्पदशक्य तावच्छेदकमस्तु इति चेन्नदत्तमुत्तरमधस्तादित्याहुः, कार्य्यम्बि भजते कार्य्यमिति, कार्य्यं, कार्य्यरूपा पृथिवी, त्रिविधं, त्रिप्र कारिके, त्यर्थः आदिपदमिन्द्रियविषयोभयपरं, अन्यत्सर्व्वं ।

**कार्य्यंत्रिविधंशरीरादिभेदेन, तत्रभो गाय तनमन्त्यावयविशरीरं ॥**

पूर्व्ववत्, प्राथम्याच्छरीरंनिरूपयतितत्रेति, तेषुमध्ये, भोगाश्चानुभवविशेषः सुखदुःखान्यतरसाक्षात्कार इतियावत् भोगस्यायतनमवच्छेदकमित्यर्थः अवच्छेदकत्वंषष्ठ्यर्थः अथ वाभोगस्यायतनंस्थानम धिकरण,मवच्छेदकतासम्बंधेन भोगा

धिकरणमितियावत्, तथाचावच्छेदकतासम्बंधेन भोगाधिकर णत्वेसत्यन्त्यावयवित्वंशरीरत्वमित्यर्थः ननुयच्छरीरावच्छेदेन भोगोनोत्पन्नस्तत्राऽव्याप्तिरितिवाच्यं तच्छरीरेमानाभावात्, अ थवाऽवच्छेदकतावच्छेदकजाति मत्वसम्बंधेन भोगवत्वस्यविव क्षितत्वात् तथाविधचैत्रत्वादिजातिमत्वस्यतत्रसत्वा ल्लक्षणसम न्वयः नरसिंहशरीरस्यापि कल्पभेदेनभिन्नत्वान्नतत्राऽव्याप्त्यवका शइति, केचित्तुआयतनंकारणंतथाचावच्छेदकतासम्बंधावच्छि न्नभोगत्वावच्छिन्न कार्य्यतानिरूपिततादात्म्यसम्बधावच्छिन्न कारणतावत्वेसत्यन्त्यावयविवत्वंशरीरत्वमित्यर्थः जनकत्वंचात्र स्वरूपयोग्यत्वमतोनोक्ता ऽव्याप्त्यवकाशइत्याहुः, घटपटादावति व्याप्तिवारणायसत्यन्त्यं, तेषामप्यन्त्यावयवित्वात्, करचरणा दावतिव्याप्तिवारणाय विशेष्यदलं, तेषामपिभोगायतनत्वात् पा देमेपीडानशिरसीत्याद्यनुभवात्, नचांगुल्याद्यवयवित्वस्यतत्रा पि सत्वादतिव्याप्तिस्तदवस्थैवेति वाच्यमन्त्यावयवित्वस्यावयव भिन्नार्थकत्वान्नातिव्याप्तिरिति, शरीरंद्विविधंयोनिजायोनिजभे दात्, योनिजमपिद्विविधंजरायु[1]जाण्डजभेदात्, जरायुजमपिद्विवि धं मनुष्यपशुभेदात्, अण्डजमपिसर्पपक्षिपिपीलिकादिभेदेनानेक विधं, अयोनिजमपिस्वेदजोद्भिदनारकीयस्वर्गीयभेदेनानेकविधं, स्वेदजंकृमिदंशादिभेदेनानेकविधं, उद्भिदमपितरुगुल्मादिभेदेना नेकविधं, वृक्षादावपिपत्रविकाशसंकोचाभ्यां सुखदुःखानुमाना न्नशरीरलक्षणस्यतत्राऽव्याप्तिशंकापि, केचित्तुशरीरत्वंनजातिः पृ थिवीत्वादिनासांकर्यात्,किंतुचेष्टादिमत्वेसत्यन्त्यावयवित्वं,घटा दावतिव्याप्तिवारणायसत्यंतं, अंगुल्यादावतिव्याप्तिवारणाय वि

[१][टि॰] गर्भवेष्टनचर्म्मपुटकंजरायुः॥

शेष्यदलं, हस्तादावतिव्याप्तिवारणायांत्यपदं, अन्यथाहस्तादाव प्यगुंल्याद्यवयविल्वस्यसत्वादतिव्याप्तेर्दुर्व्वारत्वात्, हस्तेशरीरा वयवत्व सत्वेनान्त्यावयवित्वविरहान्नतदुपादानेऽति व्याप्तिरिति नचयच्छरीरेचेष्टा[१]नोत्पन्नातत्राव्याप्तिरितिवाच्यं तच्छरीरेमाना भावात्, यद्वाचेष्टासमानाधिकरणान्त्यावयविवृत्तिद्रव्यत्व व्याप्य जातिमत्वस्य विवक्षितत्वादिति नचपृथिवीत्वमादायघटादावति व्याप्तिरितिवाच्यं द्रव्यत्वव्याप्यत्वंपरित्यज्या न्त्यावयविमात्र वृत्तित्वस्यविवक्षितत्वात् पृथिवीत्वस्यावयवेपिसत्वा न्नातिव्या प्तिः, मनुष्यत्वचैत्रत्वादिकजातिमादाय लक्षणसमन्वयसंभवा न्नकाचिदनुपपत्तिः, नचवृक्षेचेष्टादिमत्वे मानाभावादितिवाच्य मध्यात्मवायुसं[२]वंधस्यमानत्वात्, अत्रापिकिंमानमितिचेत् भग्नक्ष तसंरोहणादिनातदनुमानादित्याहु, स्तच्चिन्त्य, माचार्य्यं ल क्षणापेक्षयागौरवात्, लक्षणस्यजातिघटित तयाजातेश्ववृक्षत्वम नुष्यत्वादिभेदेनानेकविधतयालक्षणेऽनेकत्वापत्ति, रेकत्वव्यवहा रानुपपत्ति, र्लक्षणेलक्ष्यतावच्छेदकाधिकरणवृक्षादौ चालिनी न्यायेनमनुष्यत्वाभावस्यमनुष्येवृक्षत्वाभावस्य चसत्वेनलक्ष्यवृ त्त्यभावप्रतियोगित्वप्रसंग श्चस्यादिति, नहिलक्षणे लक्ष्यवृत्त्यं ताभावप्रतियोगित्वं तत्रकाराभिप्रेत,मनुक्तत्वात्, आचार्य्यलक्ष णस्यचभोगत्व वत्वेसत्यवयवत्वावच्छिन्नप्रतियोगिताकभेदवत्व पर्य्यवसितत्वात् भेदस्यैक्येनोक्तदोषाणांनात्रावकाशइति, भो गत्ववत्ताचस्वाश्रयावच्छेदकत्व सम्वंधेन, स्वंभोगत्व, मितिसंक्षे पः ॥ इन्द्रियंनिरूपयतिशरीरेति, ।

[१] [टि॰] चेष्टात्वञ्चचेष्टवे इतिप्रत्यक्षसिद्धोजातिविशेषः,

[२] प्राणाख्यवायु सम्बन्धस्य ॥

मू० । शरीरसंयुक्तमपरोक्ष प्रतीतिसाधनमतीन्द्रियमिन्द्रियम् ॥

इन्द्रियत्वनंजातिः पृथिवीत्वादिनासंकरात्, किंतुशरीर संयुक्तत्वे सत्यपरोक्षप्रतीतिसाधनत्वेसत्यतीन्द्रियत्वंतत्, निर्विक ल्पकज्ञानेआत्ममनः संयोगेविषयेन्द्रिसंयोगेष्वतिव्याप्तिनिरासा यशरीरसंयुक्तेति, तेषांप्रत्यक्षकारणत्वातीन्द्रियत्वोभयत्रत्वेपि सं योगानाश्रयत्वात् गुणेगुणानंगीकारात्, अथलाघवात्संयोगा श्रयत्वमेवोच्यतां शरीरग्रहणस्यवैयर्थ्यादितिचेन्न पश्यत्यचक्षुः सशृणोत्यकर्ण इत्येतच्छ्रुत्याश्रावणप्रत्यक्षजनकत्वस्याती न्द्रि यत्वस्य संयोगाश्रयत्वस्य परमेश्वरीयश्रावणप्रत्यक्ष संपादकेसत्वे नातिव्याप्त्यापत्तेः, नचेष्टापत्ति,र कर्णेतिश्रवणात्, तथाचप रमेश्वरस्य शरीरसम्वंधाभावान्नातिव्याप्तिः, शरीरसंयुक्तपरमा णावतिव्याप्तिवारणाया परोक्षज्ञानसाधनत्वेसतीतिविशेषणम्, अथवासुषुम्नायामतिव्याप्तिवारणायतदिति, अपरोक्षत्वानुपादा नेज्ञायमानलिंगस्यानुमितिकरणत्व पक्षेतत्रैवातिव्याप्तिस्तस्या पि क्वचिल्लिंगत्वात्, तदुपादानेचपरमाणौमहत्व लक्षणकारणा भावात्प्रत्यक्षजनकत्वविरहान्नोक्तातिव्याप्तिरिति, शरीरसंयुक्त घटपटादौ स्वीयस्वीयप्रत्यक्षजनके ऽतिव्याप्तिवारणायातीन्द्रि यत्वेसतीति, तथाचतत्रविषयतयाप्रत्यक्ष जनकत्वसत्वेप्यतीन्द्रि यत्वस्यासत्वान्नातिव्याप्तिरिति, चक्षुरादौशरीरयुक्तत्वस्यघटत दीयरूपादिप्रत्यक्ष जनकत्वस्यातीन्द्रियत्वस्यसत्वाल्लक्षणसमन्व यः, इन्द्रियावयवसंयोग दशायांप्रत्यक्षमभ्युपगच्छतांप्राचाम्म ते इन्द्रियावयवेऽतिव्याप्ति, रेवंकालादौरूपाभावप्रत्यक्षेसन्निक

र्ष घटकतयाकारणेकालादावतिव्याप्ति,रितिचेन्न कालेऽतीन्द्रियत्वाभावात् तस्यचमहत्वाश्रयत्वात्, अवयवान्यत्वस्यविशेषणांतरस्य निवेशादेवेन्द्रियावयवेष्वतिव्याप्तिवारणसंभवात्, यद्वानव्यैस्तदानींप्रत्यक्षानभ्युपगमान्नातिव्याप्तिरितिभावः, केचित्तुइन्द्रियत्वंनजातिः पृथिव्यादिनासंकरात्, किन्तुशब्देतरोद्भूतविशेषगुणानाश्रयत्वेसतिज्ञान कारणीभूतमनस्संयोगाश्रयत्वम्, आत्मादिवारणायसत्यन्तं, उद्भूतविशेषगुणस्यश्रोत्रेसत्वेनतत्राव्याप्तिवारणाय शब्देतरेति, विशेषगुणस्यरूपादेश्चक्षुषिसत्वादुद्भूतेति, विशेषगुणविशेषणं, उद्भूतत्वंनजातिः शुक्लत्वादिनासंकरात् नचशुक्लत्वादिव्याप्यंनानैवोद्भूतत्वमितिवाच्य मुद्भूतरूपत्वादिनाचाक्षुषादौजनकत्वानुपपत्तेः, किंतुशुक्लत्वादिव्याप्यमनुद्भूतत्वंनानातत्तदभावकूटश्चोद्भूतत्वं, तच्चसंयोगादावपि तथाचशब्देतरोद्भूतगुणसंयोगादिश्चक्षुरादावप्यस्त्यतो विशेषेति, कालादिवारणाय विशेष्यदलं, इन्द्रियावयव विषयसंयोगस्यापि प्राचांमतेप्रत्यक्षजनकत्वादिन्द्रियावयववारणाय, नव्यमतेकालादौ रूपाभावप्रत्यक्षेसन्निकर्षघटकतयाकारणी भूतचक्षुस्संयागाश्रयस्य कालादेर्वारणाय, मनष्पदं, ज्ञानकारणमित्यपितद्वारणाय, इत्याहु, स्तच्चिन्त्यं, नन्वपरोक्षज्ञानं यदीन्द्रियजन्यज्ञानंतदाऽनुमित्यादावतिव्याप्तिस्तस्यापिमनोजन्यत्वात्, इन्द्रियत्वेनयज्ज्ञानं प्रतिजनकत्वंतदित्युक्तौ पुनरिन्द्रियंकिमितिरीत्यात्माश्रयान्योन्याश्रयप्रसंगात्, इन्द्रियत्वेनसामान्यरूपेणकार

---

[ २ ] [ टि॰ ] चर्म्ममनस्संयोग कारणत्वपक्षे चर्म्मण्यतिव्याप्तिरतश्चात्मभिन्नत्वमनिवेशितमिति ॥

णत्वस्यप्रमाणाभावेनान भ्युपगमाच्च, परमेश्वरीयप्रत्यक्षेऽव्याप्तिश्चातः स्वयमपरोक्षज्ञानंनिरूपयतिज्ञानेति,।

मू० । ज्ञानकरणजन्यत्वरहित ज्ञानत्वमपरोक्षत्वम् ॥

तथाचकरणविधयाज्ञान निष्ठजनकतानिरूपितजन्यत्वाभाववत्वेसतिज्ञानत्वमपरोक्षत्वमितिनिष्कर्षः अनुमित्यादावतिव्याप्तिवारणाय विशेषणदलं, घटादावतिव्याप्तिवारणाय विशेष्यदलं, चाक्षुषादौकरणविधयाचक्षुरादेर्जनकत्वात् ज्ञानस्यकरणविधयाजनकत्वाभावात् निर्विकल्पज्ञानस्य साक्षादेवप्रत्यक्षहेतुत्वाल्लक्षणसमन्वयः, अनुमितौव्याप्तिज्ञानस्यशाब्दबोधेच पदज्ञानस्यउपमितौ गवयादिधर्म्मिकगोसादृश्यज्ञानस्य स्मृतावनुभवस्य करणविधयाहेतुत्वान्नतत्रातिव्याप्तिरिति, करणत्वञ्चासाधारणत्वं, असाधारणत्वंच व्यापारवत्वं, व्यापारवत्ताचस्वजनकत्व स्वजन्यजनकत्वोभयसम्बंधेन, स्वंव्यापारः प्रकृतेविषयेन्द्रियसम्बंधोव्यापारः सचचाक्षुषस्थलेत्वाचस्थलेचपोढा, संयोगसंयुक्तसमवाय संयुक्तसमवेतसमवाय संयुक्तविशेषणतासंयुक्तसमवेतविशेषणता संयुक्तसमवेतसमवेतविशेषणता भेदात्, श्रावणघ्राणजरासनस्थलेच सचतुर्धा, संयुक्तसमवाय संयुक्तसमवेतसमवाय संयुक्तसमवेतविशेषणतासंयुक्तसमवेत समवेतविशेषणताभेदात्, तथाचद्रव्यविषयकचाक्षुषप्रत्यक्षं प्रत्युद्भूतरूपाविशिष्टालोकसंयोगावच्छिन्नचक्षुस्संयोगः कारणं, उद्भूतरूपवैशिष्ट्यंचात्रसमवायघटितसामानाधिकरण्यसम्बंधेनबोध्यम्, द्रव्यसमवेतादिप्रत्यक्षस्थलेच सामानाधिकरण्यघटितसामानाधिकरण्यादि

सम्बंधेनेतद्वोध्यम्, वस्तुतस्तुउद्भूतरूपसहकृतालोकसंयोगावच्छिन्नचक्षुसंयोगःकारणम्, उद्भूतरूपस्यचसमवायेन द्रव्यप्रत्यक्षेऽन्यत्रसामानाधिकरण्यादिसम्बन्धेनतद्वोध्यम्, उद्भूतरूपसहकृतत्वानुपादानेवाया वालोकसंयोगावच्छिन्नचक्षुस्संयोगस्य सत्वेनतदंतर्भावेणव्यभिचारापत्तेः नचरूपवत्वविरहादेवव्यभिचारवारणसंभवादुद्भूतत्वंव्यर्थमितिवाच्यं भर्जनकपालस्थवह्नौचक्षुरादौचरूपवत्वस्य सत्वेनतदन्तर्भावेणव्यभिचारापत्तेरतउद्भूतत्वस्यो पादानं, तच्चरूपविशेषणम्, नचपरमाणावुद्भूतरूपस्य सत्वात्तदन्तर्भावेणव्यभिचारापत्तिरितिवाच्यंमहत्वस्यापितत्रकारणत्वात्, आलोकसंयोगावच्छिन्नत्वानुपादानेपृष्ठदेशावच्छेदेनालोकसंयोगस्याग्रदेशावच्छेदेन चक्षुस्संयोगस्यान्धकारेघटादौ सत्वेनतदन्तर्भावेण व्यभिचारप्रसंगात्, द्रव्यसमवेतविषयकचाक्षुषप्रत्यक्षंप्रतिनिरुक्तविशेषणा वच्छिन्नचक्षुस्संयुक्तसमवायः कारणं, द्रव्यसमवेत समवेतविषय कचाक्षुषप्रत्यक्षंप्रति निरुक्तचक्षुस्संयुक्तसमवेतसमवायः कारणं, एवंद्रव्यवृत्त्य भावविषयकचाक्षुप्रत्यक्षंप्रतिनिरुक्त चक्षुस्संयुक्तविशेषणता कारणम्, द्रव्यसमवेतवृत्त्यभावविषय कचाक्षुषप्रत्यक्षंप्रतिनिरुक्तचक्षुस्संयुक्तसमवेत विशेषणताकारणं, एवमन्यत्राप्यूहनीयं, एवंद्रव्यविषयकत्वाचप्रत्यक्षंप्रतिरूपवत्वोद्भूतस्पर्शवत्वसहकृतत्वक्संयोगः कारणमितिप्राचीनाः, नव्यास्तुउद्भूतस्पर्शवत्व सहकृतस्त्वक्संयोगः कारणं, नचवायोरपिप्रत्यक्षंस्यादितिवाच्यमिष्टत्वात् प्रभापंश्यामीतिवत् वायुंस्पृशामीत्यनुभवस्य वायुप्रत्यक्षेप्रमाणत्वात्, चक्षुर्गोचराणिउद्भूतरूपमहत्वविशिष्टद्रव्याणि, तत्समवेतगुणकर्मजाति समवायादीनि, एवंरूपरूपत्वातिरिक्तानि यानिचक्षुर्ग्राह्याणिता

निसर्वाणिचत्वगिन्द्रियग्राह्याणि, वायुवायुत्वोद्भूतस्पर्शतत्वानि चचुर्ग्राह्यातिरिक्तान्यपित्व गिन्द्रियग्राह्याणीतिप्राहुः, अन्यत्सर्वं मग्रेवक्ष्यामः, नन्वतीन्द्रियत्वंनजातिः पृथिवीत्वादिनाशंकरा तदस्तन्निरूपयतिक्रमेति, ।

मू० । अतीन्द्रियत्वंक्रमाज्ञानसाधनत्वं, प्रतीयमानतयाभोगसाधनंविषय, इतिपृथ्वी ॥

क्रमपदोत्तरनञ्पदंज्ञानसाकांक्षं, साधनपदंतादात्म्यसंसर्गावच्छिन्न जनकताश्रयपरं, क्रमपदमपरोक्षपरं, तथाचापरोक्ष ज्ञानजनकताश्रयभिन्नत्वम तीन्द्रियत्वमितिनिष्कर्षः अतीन्द्रियविषयकप्रत्यक्षस्या प्रसिद्धतयाविषयत्वसम्बन्धावच्छिन्न प्रत्यक्षत्वावच्छिन्नजन्यतानिरूपिततादात्म्य सम्बधावच्छिन्नजनकतावद्भिन्नत्वस्य चक्षुरादौसत्वाल्लक्षणसमन्वयः विषयतासंसर्गेण प्रत्यक्षं प्रतितादात्म्येन विषयस्यकारणत्वान्नघटादावतिव्याप्तिरिति, विषयंनिरूपय तिप्रतीयमानतयेति, प्रतीयमानतयेत्यनेन अविदितसुखदुष्खयोरसत्वंसूचितम् , प्रतीयमानत्वं, प्रतीतिविषयत्वं, अवच्छिन्नत्वंतृतीयार्थः, भोगो, ऽनुभवविशेषः, सुखदुष्खान्यतरसाक्षात्कारइतियावत्, तस्यसाधन, मभेदेनेतिशेषः साधनपदंजनकताश्रयपरं जनकताचसाक्षात् परंपरासाधारणीग्राह्या, तथाचविषयतासम्बंधावच्छिन्नभोग निष्ठजन्यतानिरूपित तादात्म्यसम्बंधावच्छिन्न जनकतावान्विषय इतिपर्य्यवसितलक्षणार्थः, तादात्म्यसम्बंधावच्छिन्नभोगनिष्ठजन्यतानिरूपितविषयित्व स्वप्रयोज्यनिरूपितविषयित्वान्यतरसम्बंधावच्छिन्नजनकता

वान्विषय इतिलक्षणवाक्यार्थः एतद्भाभावैवचप्रतीयमानतये त्यस्योपादानान्नतस्यवैयर्थ्यशंकेति, स्वप्रयोज्यश्चस्वजन्य स्व जन्यजन्यादिरूपंबोध्यम्, परंपराजनकतायामवयविनिष्ठत्वो पा दानान्नित्यानांव्यावृत्तिरिति, केचित्तुप्रतीयमानत्वंप्रत्यक्षविषय त्वं, वैशिष्ट्यंतृतीयार्थः तथाचप्रत्यक्षविषयत्वे सतिविषयत्व सम्बंधावच्छिन्नभोग निष्ठजन्यतानिरूपिततादात्म्यसम्बंधाव च्छिन्न जनकतावान् विषयइतिपर्य्यवसितार्थ, स्तथाचनित्यादौ प्रत्यक्षविषयत्वा भावान्नातिव्याप्तिः जनकताचात्रप्रयोजकतारूपा ग्राह्या, नातः परंपरयाभोगजनकेऽव्याप्तिरित्याहु, स्तच्चिन्त्यं, द्व्यणुकेष्वव्याप्तेरिति, सर्वंहिकार्य्यमदृष्टाधीनं, कार्य्यमात्रंप्रत्यदृ ष्टस्यहेतुत्वात्, यत्कार्य्यंयदीयादृष्टाकृष्टंतत्तदुपभोगसाधनमिति व्याप्त्याकार्यमात्रस्य साक्षात्परंपरयाभोगसाधनत्वाल्लक्षणसम न्वयइति, यद्यपि शरीरेन्द्रियाणामपिनिरुक्तविषयत्वाक्रांतत्वात् त्रैविध्यकथनानुपपत्ति, स्तथापिस्वतन्त्रेच्छत्वात्, शिष्यबुद्धिवै शद्यानुरोधाद्वा, शरीरत्वेन्द्रियत्व विषयत्वभेदेनत्रयाणांभेदाद्वा, कार्यविभजनान्नानुपपत्तिरिति, इतिपृथिवीति, पृथिव्याः नि रूपणंविभागश्चेत्यर्थः ॥ अथजलंनिरूपयतिपृथिवीति, ।

मू० । पृथिवीवृत्तित्व रहितहिमक रकावृत्तिजातिमज्जलं, तन्नित्यानित्यभे देनद्विविधं, जलत्वंनित्यवृत्तिहिमकरका वृत्तिजातित्वात् सत्तावदितितत्सिद्धिः ।

रहितान्तंसत्ताद्रव्यत्वमादाय पृथिव्यादावतिव्याप्तिवार

णाय, जातिविशेषणं, पृथिवीनिरूपितसमवाय सम्बंधावच्छि
न्नवृत्तित्वाभाववदर्थकं, तेनकालिकसम्बंधेन जलत्वेपृथिवीवृ
त्तित्वस्य, संयोगादिसम्बंधेन पृथिवीवृत्तित्वाभावस्यसत्त्वाद्द्रव्य
त्वादौ, सत्वेना संभवातिव्याप्त्योरनवकाशइति, हिमकरकयोरु
पादानफलंपृथिवीलक्षण वदत्राप्यूहनीयं, जात्युपादानफलमपि
पूर्ववत्, केचित्तुस्नेहवज्जलं,सांसिद्धिकद्रवत्व वज्जलं,अभास्वरशु
क्लरूपवज्जलं,तिक्तासमानाधिकरण माधुर्य्यसमानाधिकरणद्रव्य
[२]
त्व साक्षाद्व्याप्यजातिमज्जल, मित्यादिनानालक्षणंकुर्वन्ति, तच्चि
न्त्यं, चरमभिन्नलक्षणेपुनानात्वापत्ते, रेकत्वव्यवहारानुपपत्तेश्च,
लक्षणेलक्ष्यैकदेशनिष्ठाभाव प्रतियोगित्वापत्त्यालक्षणे लक्ष्यताव
च्छेदकव्यापकत्वानुपपत्तेश्च, स्नेहत्वस्यापितन्मतेद्वैविध्यात्तमादा
यापि लक्षणस्यलक्ष्यतावच्छेदकव्यापकत्वासंभवात्, चरमेचा
चार्य्यलक्षणापेक्षयागौरवप्रसंगादिति, जलंविभजतेतन्नित्येति,
तत्, जलं, नित्यं,
परमाणुरूपं, अनित्यं, कार्य्यरूपं, द्विविधं, द्विप्रकारकं,ननुजलत्व
स्य नित्यवृत्तित्वेमानाभावात् द्वैविध्यानुपपत्तिरित्यतआह जल
त्वमिति, हेतुघटकहिमवृत्तित्वानुपादानेकरकात्वान्तर्भावेण, कर
कावृत्तित्वानुपादानेहिमत्वांतर्भावेण, व्यभिचारप्रसंगादतस्तयो
रुपादानं, तत्सिद्धि, र्जलत्वेनित्यवृत्तित्व सिद्धि,स्तथाचनद्वैवि
ध्यानुपपत्तिरितिभावः, ननुजलत्वस्यकरकावृत्तित्वेमानाभावादु

[ टि॰ ] [ २ ] पृथिवीत्ववारणाया समानाधिकरणान्तं,
तेजस्त्ववारणाय माधुर्य्यसमानाधिकरणेति, गुड़त्ववारणाय
साक्षादिति, ।

क्तानुमानेस्वरूपासिद्धिरतआहकरकेति, ।

मू० । करकागगनवृत्तित्व रहित हिमवृत्तिजातिमतीस्नेहा धिकरणत्वात् हिमवदिति करकायान्तत्सिद्धिः ॥

द्रव्यत्वसत्वान्तर्भावेणार्थान्तरवारणाय गगनवृत्तित्वरहितत्वविशेषणं, करकात्वान्तर्भावेणार्थान्तरवारणाय हिमवृत्तीति, जातिविशेषणमभेदेन, हिमकरकोभयत्वमादायार्थान्तरवारणाय जात्युपादानं,स्नेहस्य समवायसम्बंधेन हेतुतालाभायहेतुघटकाधिकरणत्वस्यो पादान,मन्यथाकालिकेनस्नेहस्य पृथिव्यादौसत्वेन व्यभिचारप्रसंगात्, तत्सिद्धि, र्जलत्वसिद्धि, स्तथाचन स्वरूपासिद्धिरितिभावः, अनित्यजलंविभजायितुमाह अनित्यं त्रिविधमिति, ॥

मू० । अनित्यंत्रिविधं शरीरादिभेदेन, शरीरंवरुणलोके, जलपरमाणवः शरीरारम्भकाइन्द्रियारम्भकत्वात् पार्थिवपरमाणुवत्,इन्द्रियारम्भकत्वंरसनस्याप्यत्वासिद्धं, रसनमाप्यंरूपादिषुमध्येरसस्यैवाभिव्यञ्जकत्वात् शक्तुरसाभिव्यंजकजलवत् ॥

त्रिविधं,त्रिप्रकारकं, आदिपदेनविषयेन्द्रिययोरुपग्रहः तथाचकार्य्यजलंत्रिविधं शरीरेन्द्रियविषयभेदादिति,शरीरम यो निजंवोध्यं, एवंनारकीयादिशरीरमप्ययोनिजंवोध्यं, ननुजली यशरीरंलोकेन दृष्टचरमित्यतआहवरुणलोकइति, प्रसिद्धमितिशे ष, स्तत्रचेतिहासपुराणयोः प्रमाणत्वात्, ननुजलेकाठिन्याभावा त्तच्छरीरस्यानुभवागोचरत्वादित्यतआह जलपरमाणवइति, परंपरयेतिशेषः द्व्यणुकत्रशरेण्वादिक्रमेणेतियावत्, ननुरसनस्य जलत्वसिद्धौ जलपरमाणुपुशरीरारम्भकत्वं संभवदुक्तिकंभवेत् प्रथमतस्तत्रैवप्रमाणाभावादित्याशंक्योत्तरयति रसनेति, रसस्यै वाभिव्यंजकत्वात्, रसमात्रविषयकपरोक्षज्ञानजनकत्वात्, रस मात्रविषयकत्वन्तुरसेतरगुणाविषयकत्वं, तेनरसत्वस्यतद्विषयत्वे पि नक्षातिरिति,नचनिरुक्तहेतो रिन्द्रियसन्निकर्षेपिसत्वाद्व्यभि चार इतिवाच्यंद्रव्यत्वे सतीत्यस्यहेतौनिवेशात् सन्निकर्षेद्रव्य त्वस्यविरहेणव्यभिचारवारणसम्भवात्, ननुरसनस्येन्द्रियत्वेमा नाभावादतआहरसनसिद्धिस्त्विति, ॥

मू० । रसनसिद्धिस्तु,रसोपलब्धिः करणसाध्या,अपरोक्षप्रतीतित्वात् रूपो पलब्धिवदिति, विषयस्तुसरित्समुद्रादि मकरकादिः, नचकरकाया काठिन्यात्पा र्थिवत्वमाशंकनीय, मनन्तरमेवस्वभावा पगमा, दित्यापः ॥

रसनस्येन्द्रियत्वसिद्धिरित्यर्थः रसोपलब्धिः, रसविषय

कमत्यक्षज्ञानं, करणसाध्या, करणजन्यं, विषयभेदंदर्शयतिविषय स्त्विति, आदिपदंकूपतडागादिजलपरं, ननुकरका पृथिवीकाठि न्यात् घटवदित्यनेनपृथिवीत्वसिद्धौ जलत्वेनित्यवृत्तित्व सा धकानुमानेहिभिन्नवृत्तिताद्दशजातौ करकावृतित्वविरहेणहेत्वसिद्धि प्रसंगः, विषयभेदकथनञ्चानुपपन्न, मेवंकरकायांजलत्वसाधकानु मानेवाधप्रसंगोपी, तिकरकेत्यनेनाशंका नचस्वभावेत्यनेनोत्तरय तिअनन्तरेति, अनन्तरमेव, करकादर्शनानन्तरमेव, स्वभावापग मात्, उपाधिंविनाकाठिन्यनाशात्, तथाचघटकाठिन्यस्यस्थिर त्वान्नहिकाठिन्यंस्वतः कुत्रापिनश्यति, तथाचकरकानकठिना तेजस्संयोगंविनाद्रुतत्वात् सरिज्जलवत्, एवंकरकानकठिनासां सिद्धिकद्रवत्वात् जलवत्, करकानपृथिवीस्नेहवत्वात्, अथवा सांसिद्धिकद्रवत्वात्, वस्तुतस्तुकरकानपृथिवीकरकादर्शनानन्त रंजलत्वेन प्रमीतत्वात्, स्वभावापगमानन्तरंप्रत्यक्षेण गृहीतजल त्वाच्च, तथाचनोक्तदोषाणामवकाशइतिभावः, ननुकरकायां सांसिद्धिकद्रवत्वसत्वेकथंनसर्वदाद्रुतत्वमितिचेन्न प्राणिनामदृष्ट वशात् द्रुतत्वप्रतिरोधादिति, इत्यापः, जलस्यलक्षणंविभागश्चे त्यर्थः, तेजोनिरूपयतिरसेति, ।

मू० । रसात्यन्ताभावसमानाधिक रणरूपाधिकरणंतेजः, करकाऽवृत्तिवि दुचदाकरजवृत्तिजातिमद्वा, ॥

पूर्ववदत्रापिरसभेदादिकमादायाति व्याप्तिनिरासाया त्यन्ताभावेत्यस्योपादानंबोध्यं, पृथिवीजलादावतिव्याप्तिवार

णाय समानाधिकरणान्तं,रूपविशेषणं, अधिकरणपदंसमवायस
म्बंधेन रूपवदर्थक,मन्यथाकालिकादिसम्बंधेन तथाविधरूपस्य
महाकालादावपिसत्वेन तत्रातिव्याप्तिप्रसगःस्यात्, ननुरसा
त्यन्ताभावरूपोभयत्वमेवास्तुलक्षणंलाघवात् समानाधिकरणांत
र्भावेण लक्षणस्यगौरवग्रस्तत्वादितिचेन्न समवायेनरसाभावस्य
स्वरूपसम्बंधेनरूपस्य चावृत्तितयास्वरूपसमवाययोर्निवेशासंभ
वात् कालिकसम्बंधेननिरुक्तोभयवत्वस्य पृथिवीजलकालादौ
सत्वेनातिव्याप्तिप्रसंगात्, केचित्तुउभयत्वाश्रयस्य रसाभावस्य
वाय्वादौरूपस्यच पृथिव्यादौसत्वेनातिव्याप्ति, यत्किञ्चिदुभ
यवत्वनिवेशेऽव्याप्ति, यावदुभयवत्व निवेशेचासंभवः, निरु
क्तोभयत्वावच्छिन्ननिरूपकताकाधिकरणता निवेशेलाघवानव
काश,उभयत्वस्यधी विशेषविषयतात्मकतया निरूपकतावच्छेद
कस्य गुरुतरस्यनिवेशादित्याहुः, परंतुरूपस्यानेकत्वेनतादृशो
भयस्यानेकत्वाल्लक्षणेऽनेकत्वापत्तिश्चस्यात्, स्याच्चलक्षणेल
क्ष्यतावच्छेदकव्यापकत्वानुपपत्ति, रतस्समानाधिकरणेति, तथा
चरसाभाववत्वं पर्य्यवसितलक्षणार्थः अभाववत्ताचस्वसमाना
धिकरणरूपवत्वसम्बंधेन,स्वंरसाभावः,तथाचरसाभावस्यैकत्वा
न्नोक्तदोषाणामवकाशइति, तादृशसम्बन्धलाभायसमानाधिकर
णरूपेती,तिप्राहुः, ननुयथाश्रुतेऽनेकत्वादिदोषस्य विद्यमानत्वा
त्परंपरायाःसंसर्गत्वानभ्युपगमाच्चातोलक्षणान्तरमाहकरकावृत्ती
ति, तथाचकरकानिरूपित समवायसम्बन्धावच्छिन्नवृत्तिता
वदन्यत्वे सतिविद्युन्निरूपितसमवाय सम्बन्धावच्छिन्नवृत्ति
तावत्त्वेसत्याकरजनिरूपितसमवाय सम्बन्धावच्छिन्नवृत्तिताव
ज्जातिमत्तजइतिफलितार्थः द्रव्यत्वसत्तामादायपृथिव्यादाव

तिव्याप्तिवारणाय करकावृत्तीति, जातिविशेषणं, विद्युदाकर जयोरुपादानफलं पृथिवीलक्षणवदत्राप्यूहनीयं, जात्युपादानफलमपि पूर्ववद्बोध्यमिति, ननुतेजस्त्वजातामानाभावाज्जातिघटिततेजसोलक्षणंनसंभव दुक्तिकमित्यतआह विद्युदिति, ।

मू० । विद्युत्करकावृत्तित्वरहिताकरजवृतिजातिमती विद्युदतिरिक्ताकरजान्यत्वरहितत्वात्, आकरजवत्, आकरजं,सुवर्णादिः, ननुसुवर्णादिकं पार्थिवंनैमित्तिकद्रवत्वात् घृतवदित्यनेन पार्थिवत्वसिद्धेराकरजवृत्तिजातिमत्व साधनेपिविद्युत्तेजसो र्नतैजसत्वसिद्धिरितिचेन्नस्वर्णादि कमपार्थिवमत्यन्ताग्निसंयोगेऽनुच्छिद्यमानद्रवत्वाधिकरणत्वादित्यनुमानेनापार्थिवत्वसिद्धा वसांसिद्धिकद्रवत्वसिद्धिः, अन्यत्रापार्थिवद्रवत्वमत्यन्ता।

द्रव्यत्वादिकमादायार्थान्तरवारणाय करकावृत्तित्वरहितेतिविशेषण,मभेदेनजातावन्वोति, विद्युत्त्वमादायार्थान्तरवारणायाकरजवृत्तीति, द्वित्वादिकमादायार्थान्तरवारणाय जातीति. विद्युत्सामान्यभेदविशिष्टाकरजसामान्य भेदाभावोहेतु,स्तेन नो

भयभेदादिकमादाय स्वरूपासिद्धिदृष्टांतासिद्ध्यो रवकाश,स्तथा च तादृशीजातिस्तेजस्त्वमेवेतिसिद्धा तेजस्त्वजातिस्तामादाय लक्षणसम्भवादितिभावः, आकरजंज्ञापयति आकरजंसुवर्णादि रिति, सुवर्णादौपार्थिवत्वंसंसाध्य विदुयदादौतेजस्त्वजात्यभा वंदर्शयति ननुसुवर्णादिकं पार्थिवमिति, इदमुपलक्षणम्, सुवर्णा दिकं पार्थिवंपीतरूपवत्वात् हरिद्रावत्, सुवर्णादिकंपार्थिवं पीति मगुरुत्वात् पीतघटवत्, अन्यत्सर्वंस्पष्टं, सुवर्णादौ पार्थिवत्वाभावं साधयति सुवर्णादिकमपार्थिवमिति, तथाचसुवर्णादिकं पार्थिव त्वाभाववत् अत्यन्ताग्निसंयोग विशिष्टानुच्छिद्यमानद्रवत्वात् यन्नैवंतन्नैव यथाघृतम् ।

मू० । ग्निसंयोगे उच्छिनत्तीतितर्को ऽनुसरणीयः ॥

यत्तुवा,अत्रतर्कंदर्शयति अन्यत्रेति, अन्यत्र,सुवर्णादिभि न्ने, पृथिव्यांजलेचेतियावत्, तथाचपृथिव्यांजलेचात्यन्ताग्निसं योगे द्रवत्वमुच्छिनात्ति, नश्यती,तिपृथिवीद्रवत्वंजलीयद्रवत्वंचा त्यन्ताग्निसंयोगेसति कथमपिनस्थास्यति, एवंच पार्थिवद्रवत्वं जलीयद्रवत्वंचनचिरकालीनात्यन्ताग्निसंयोग विशिष्टद्रव्यवृत्ति उच्छिद्यमानत्वात् घृतादिद्रवत्ववत् तप्तलौहस्थजलबिन्दुद्रवत्वव द्वे, त्यनेनपार्थिवजलीयद्रवत्वे उच्छिद्यमानत्वसिद्धावनुच्छि द्यमानद्रवत्वस्य तत्रतत्रवाधात्सुवर्णादौ पार्थिवत्वस्यासिद्धिरि तिभावः, ननुतदानीमपिपीतिमगुरुत्वाश्रयस्यद्रुतत्वदर्शनात्तस्य च पार्थिवत्वात्कथंपार्थिवद्रवत्वत्वावच्छेदेनो च्छिद्यमानत्वमिति चेन्नात्यन्ताग्निसंयोगेसति पीतिमगुरुत्वाश्रयोऽत्यन्ताग्निसंयोगेस

ति पूर्वरूपपराष्ट्वत्तिप्रतिबन्धकविजातीयद्रव्यसंयुक्तः अत्यन्ताग्नि संयोगेसति पूर्वरूपविजातीयरूपानधिकरणपार्थिवत्वादत्यन्ता ग्निसंयोगे जलमध्यस्थपीतपटवदित्यनेनपीतिमगुरुत्वाश्रयेविजा तीयद्रव्य ।

मू० । तच्चद्विविधम्, नित्यमनित्यं चेति, तेजस्त्वंनित्यवृत्तिविद्युदाकरज वृत्तिजातित्वात् सत्तावदितिनित्यत्वसि द्धिः ॥

संयुक्तत्वसिद्धौ वैजात्याश्रयेपार्थिवत्वाभावस्यापि सिद्धि सम्भवात्तिसिद्धंसुवर्णादिकमपार्थिवमिति, तथाचाकरजवृत्तिजाति मत्वस्य विदुयदादौपूर्वानुमानेनसिद्धौ तेजस्त्वस्यतत्रसिद्धिसम्भ वाल्लक्षणसमन्वयइतिभावः । तेजोविभजते तच्चेति, तत् , तेजः, द्वि विधं, द्विप्रकारकं, नित्यं, परमाणुरूपं, अनित्यम्, कार्यरूपं, ननु परमाणौतेजस्त्वेमानाभावाद्द्वैविध्यानुपपत्तिरित्यतआह तेजस्त्व मिति, विदुयत्त्वसुवर्णत्वान्तर्भावेण व्यभिचारवारणाय विदुय दाकरजयोरुपादानम्, द्वित्वसंयोगाद्यन्तर्भावेण व्यभिचारवार णायजात्युपादानम्, नित्यत्वसिद्धिरिति, तेजस्त्वाश्रयइतिशेष, स्तथाचनद्वैविध्यानुपपत्तिरितिभावः, ननुविदुयदादावाकरजा दौचतेजस्त्वेमानाभावादित्यतआह साधितमिति, विदुयदादावा करजादौचतेजस्त्वंप्रागितिशेषः, अनित्यंविभजतेत्रिविधमिति, आदिपदेनविषयेन्द्रिययोरुपग्रहः, ननुतैजसशरीरं लोकेनदृष्ट गोचरमितित्रैविध्यानुपपत्तिरित्यआह शरीरमिति, पुराणेतिहा सतोज्ञातत्वेन प्रसिद्धमितिशेषः, ननुतच्छरीरंपार्थिवमेवेत्यतआ

हतस्येति, तस्य, तैजसशरीरस्य, अपार्थिवत्वसिद्धिरिति, पूर्वेण दितिशेषः, तथाचतैजसशरीरंनपार्थिवं रसाभावसमानाधिकरणरूपवत्वात् प्रभावत्, यद्वातैजसशरीरंनपार्थिवमत्यन्तानलसंयोगेसत्यनुच्छिद्यमानद्रवत्वाधिकरण द्रव्योपादानोपादेयत्वात् सुवर्णवत् यन्नैवंतन्नैवम्, अथवातैजसपरमाणवो नपार्थिवशरीरारम्भकाः पार्थिवत्वशून्येन्द्रियारम्भकत्वात् यन्नैवंतन्नैवंयथाघटः, चक्षुस्तैजसं रूपस्यैवोपलम्भकत्वात् प्रभावादित्याद्यनुमानसाम्राज्यात्तैजसशरीरेपार्थिवत्वाभावः सिद्ध्यतीतिभावः ॥ इन्द्रियंदर्शयतिरूपेति, रूपोपलम्भकं, रूपविषयकापरोक्षज्ञानजनकंचक्षुरित्यर्थः, ननुतस्येन्द्रियत्वेमानाभावादित्यतआह रूपोलब्धिरिति, तथाच यथा

मू० । साधितंतेजस्त्वम्, अनित्यं त्रिविधं शरीरादिभेदेन, शरीरमादित्यलोके, तस्यापार्थिवत्वसिद्धिः । इन्द्रियंरूपोलम्भकं, रूपोलब्धिः करणसाध्याक्रियात्वात्छिदिक्रियावदितितत्सिद्धिः कर्तृप्रेर्य्यंकरणंधातुवाच्यव्यापारेण ॥

छिदिक्रियोद्यमननिपतनाभ्यांकुठारदात्रादिसाध्या तथोपपूर्वकलभधात्वर्थरूपाक्रिया रूपादिगोचरापरोक्षज्ञानरूपापि करणसाध्येतितत्सिद्धौ रूपादिगोचरापरोक्षज्ञानात्मकक्रियाकरणताकस्येत्यनुसंधाने अन्वयव्यतिरेकाभ्यांचक्षुषएवतदितिसि

द्धं शरीरसंयुक्तापरोक्षज्ञान साधनातीन्द्रियत्वस्वरूपमिन्द्रियत्वं तस्येतिभावः ।

करणंनिरूपयतिकर्तृप्रेर्य्यमिति, कर्त्राप्रेर्यं, प्रेरणीयं, कर्तृवृत्तिव्यापारवत्वंकरणत्वमित्यर्थः ननुयत्रगुरुप्रेरितःशिष्यः पठतितत्रपाठकर्तृशिष्ये करणत्वापत्तिरित्यतआह धातुवाच्येति, व्यापारेणेत्यत्रजन्यत्वंतृतीयार्थः कर्तृवृत्तिर्यः समभिव्याहृतधातुवाच्योव्यापारस्तज्जन्यव्यापारवत्,करणमित्यर्थः कुठारादिव्यापारस्यछिदिधातूपस्थाप्यकर्तृवृत्तिव्यापारजन्यत्वा ल्लक्षणसमन्वयः शिष्यकर्तृकपाठे गुरुवृत्तित्वस्यगुरुवृत्तिव्यापारजन्यत्वस्यचाभावात् गुरुवृत्तिव्यापारस्य शिष्यवृत्त्यध्ययनं प्रत्यन्यथासिद्धत्वादिति भावः, वस्तुतस्तुस्वजनकत्व स्वजन्यजनकत्वोभयसंबन्धेन वस्तु विशिष्टं,करणमिति, विषयेन्द्रियसम्बन्धविशिष्टत्वस्य चक्षुरादौ, परामर्षविशिष्टत्वस्यव्याप्तिज्ञाने, उपस्थितिविशिष्टत्वस्यपदज्ञाने, अतिदेशवाक्यार्थस्मृतिविशिष्टत्वस्यसादृश्यज्ञाने, संस्कारविशिष्टत्वस्यानुभवे, अपूर्वविशिष्टत्वस्ययज्ञादौ, सत्वेन,सर्वत्रकरणेलक्षणसमन्वयः नचकुलालजनकेकुलालेकुलालात्मकवस्तु विशिष्टत्वस्यसत्वादतिव्याप्तिरितिवाच्यं द्रव्यभिन्नवस्तुविशिष्टत्वस्यविवक्षितत्वात्, कुलालेद्रव्यभिन्नत्वाभावात्, किंचकुलालपुत्रजन्यघटव्यक्तिजनकत्वस्यकुलालजनकेविरहात्यथाश्रुतस्यैवसम्यक्त्वात्, नचकार्यमात्रंप्रतीश्वरज्ञानस्यकारणत्वात्तत्रातिव्याप्तिरितिवाच्यंजन्यत्वेसतीतिविवक्षितत्वात् नचतथाप्यदृष्टेऽतिव्याप्तिस्तस्यकार्यमात्रजनकत्वाज्जन्यत्वाच्चेतिवाच्यं स्वजनकत्वेत्यनेनस्ववृत्त्यसाधारणधर्मावच्छिन्न जन्यतानिरूपितजनकत्वस्यविवक्षितत्वा,दीश्वरज्ञानादृष्टयोः घटादिसाधारणकार्यत्वादिधर्मावच्छिन्नं

प्रत्येवजनकत्वात्तयोर्व्याप्तिसंभवात्, अथवास्वजन्यवत्वसंबन्धा
वच्छिन्नायास्वजन्यजनकतायाविवक्षितत्वात्, चक्षुरादेश्चप्रत्यक्षं
प्रतिस्वजन्यसंयोगवत्वादिसंबंधेनजनकत्वा, दीश्वरज्ञानादेरतथा
त्वा, दव्याप्त्यतिव्याप्त्योरनवकाशात्, यत्तुस्वजनकत्वस्वजन्य
वत्वोभयसंम्बंधेन वस्तुविशिष्टत्वस्यविवक्षितत्वात्, स्वजन्यवत्ता
च स्वजनकत्व स्वसामानाधिकरण्योभयसंम्बन्धेन, तथाचेश्वरज्ञा
ने सामानाधिकरण्याभावान्नातिव्याप्तिरिति, तत्तुच्छम्, चैत्रीया
दृष्टेऽतिव्याप्तेः चैत्रीयकार्यसामानाधिकरण्यस्यसत्वात्, अथश्र
वणसन्निकर्षस्य समवायस्यनित्यत्वेन श्रावणप्रत्यक्षकरणे श्रवणे
ऽव्याप्तिरितिचेन्न स्वाधिकरणत्वस्ववत्वान्यतरसम्बन्धेन वस्तुवि
शिष्टत्वस्यविवक्षितत्वात्, स्वाधिकरणत्वंच स्वजनकत्व स्वजन्य
जनकत्वोभयसंम्बन्धेन, स्ववत्ताच स्वजन्यजनकत्व स्वाभिन्ननि
त्यानिरूपितानुयोगितावत्वोभयसंम्बन्धेन, स्वाभिन्नेनित्यत्वविशे
षणात् संयोगेनित्यत्वविरहेण चक्षुःसंयुक्तघटादावतिव्याप्त्यनव
काशः, अनुयोगित्वनिवेशाच्छब्दादावतिव्याप्तिनिरासः। परेतु
शब्दस्यानित्यतयातत्प्रतियोगिकत्व विशिष्टसमवायस्य श्रवणज
न्यत्वस्वीकारान्नोक्ताव्याप्तिरितिप्राहुः। मीमांसकास्तु जनकता
संम्बन्धेनव्यापारवत्, करणं, फलेच्छाधीनेच्छाविषयो, व्यापा
रः, तथाच स्वर्गेच्छाधीनेच्छाविषयापूर्वजनकेयागे लक्षणस
मन्वयइत्याहु, स्तन्न, इच्छोत्तीर्णतादशायांजायमानंयद्रूपादिगो
चरापरोक्षज्ञानं तत्करणेचक्षुरादौ, घनगर्जनाधीनानुमितिकरणे
व्याप्तिस्मरणे, चाव्याप्तेः फलेच्छांविनाप्यनुमितिदर्शनात्, ए
वंव्यापारेपिचक्षुस्संयोगादौ परामर्षेचाव्याप्ते, र्व्यापारलक्षणस्य
तत्रतत्रासत्वात्, ननुचक्षुषितैजसत्वेमानाभावात् त्रैविध्यानुपप

त्तिरित्यतआहचक्षुस्तैजसमिति, एवकारस्योपादानान्नघटस्यस्व स्वरूपाभिव्यञ्जकत्वेन तत्रातिव्याप्ति, स्तस्य रूपवत्स्वकीयस्प र्शस्याप्यभिव्यञ्जकत्वात् नचालोकसन्निकर्षेहेतोः सत्वेनव्यभि चारइतिवाच्यं द्रव्यत्वेसतीत्यस्यहेतुविशेषणत्वात्, विषयंदर्श यति विषयेति, ॥

मू० । चक्षुस्तैजसंरूपादि षुमध्ये तस्यैवाभिव्यञ्जकत्वात् आलोकवत्, वि षस्तुभौमादि,रितितेजः॥ रूपात्यन्ताभा वसमानाधिकरणस्पर्शवान्वायुः,विप्रति पन्नस्पर्शः रूपरहितद्रव्यवृत्तिः स्पर्शत्व रहितशब्दान्यत्वरहितत्वात् शब्दवत् ॥

आदिपदेनदिव्यौदर्य्याकरज प्रभामणिचन्द्रसूर्यनक्षत्रा दीनांग्रहणम्, भूम्यांभवतीतिभौमोवह्न्यादिः, दिविभवंदिव्यं, अविन्धनं, आपः इन्धनानियस्यतदविन्धनं,विद्युदादिरित्यर्थः उदरेभवऔदर्यो,भुक्तान्नपरिणामहेतु, जठराग्निरितियावत्, आ करजंपूर्वमुक्तम्, अन्यत्प्रसिद्धम्, नन्वग्न्यादौभास्वरशुक्लरूपस्य, मरकतमण्यादौशुक्लरूपोष्णस्पर्शयो, रभावात्, चन्द्रेआकरजेचो ष्णस्पर्शस्या ननुभवात्कथंतेषांतेजस्त्वमितिचेन्नजपाकुसुमसान्नि हितस्फटिकरूपचन्द्रकान्तमणिमहौषध्यादि समवहितपावकोष्ण स्पर्शवत् पार्थिवरूपस्पर्शाभ्यांतेषांरूपस्पर्शयोः पराभवात्, च न्द्रमण्डलान्तर्वर्तिजलस्पर्शेन तदीयोष्णस्पर्शस्यपराभवादितिभा

वः, इतितेजः, तेजोनिरूपणंविभागश्च, शङ्करमिश्रास्तु रसवदवृ त्तिद्रवत्ववद्वृत्तिजात्यधिकरणत्वंतेजस्त्वम्, नित्यरूपसमानाधि करणत्वेसति नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्व व्याप्यजा त्यधिकरणत्वंवा, गुरुत्वसमानाधिकरणात्यन्ताभाव प्रतियोगिरू पसमानाधिकरण द्रव्यत्वसाक्षाद्व्याप्यजात्यधिकरणत्वम्वे, त्या हु, स्तच्चिन्त्यम्, यत्तुउष्णस्पर्शवत्वं, भास्वरशुक्लरूपवत्व, मि त्यादिलक्षणं, तत्तुच्छम्, उत्पत्तिकालेऽव्याप्तिर व्यापकत्वा दिदोषश्चस्यात् ॥ वायुंनिरूपयतिरूपेति, पृथिव्यादावतिव्या प्तिवारणाय समानाधिकरणान्तं, स्पर्शविशेषणम्, गगनादा वतिव्याप्तिवारणायस्पर्शवानिति, अत्यन्ताभावसमानाधिकर णानांव्यावृत्तिः पूर्ववदत्राप्यूहनीयेति, स्पर्शस्यानेकत्वादुक्तदो षाणांफलंपूर्ववद्बोध्यमिति, ननुस्पर्शस्यरूपसामानाधिकरण्यानु भवाद्रूपाभावसमानाधिकरणस्पर्शस्या प्रसिद्धत्वादेवञ्च वाया वपिप्रमाणाभावाल्लक्ष्य लक्षणयोरप्रसिद्ध्यातादृशलक्षणाभिधा नमनुचितमित्याह विप्रतिपन्नेति, ॥ पृथिव्यादिस्पर्शान्तर्भावे

[ टि० ] प्रथमलक्षणेपृथिवी त्वादिकमादायातिव्याप्तिवा रणाय रसवदवृत्तीति, वायुत्वादिवारणाय द्रवत्ववद्वृत्तीति, तेजोवाय्वन्यतरत्ववारणायजातीति, द्वितीयलक्षणेपृथिवीत्व वारणायसत्यन्तं, जलत्ववारणायनैमित्तिक द्रवत्वसमानाधिक रणेति, द्रव्यत्वसत्तावारणाय द्रव्यत्वव्याप्येति, तृतीयलक्षणे जलत्वपृथिवीत्ववारणाय प्रतियोग्यन्तं, जातिविशेषणं, गुरुत्वा समानाधिकरणस्य तदर्थत्वान्नदोषतादवस्थ्यं, यद्वारूपविशेष ण मेवतत् गुरुत्वसामानाधिकरण्यानवच्छेदकरूपत्व व्याप्य

ण वाधवारणाय विप्रतिपन्नत्वेनपक्षोविशेषितः, विप्रतिपन्नः रूपवद्भिन्नवृत्तित्व प्रकारकसंशयविशेष्य,स्तथाच रूपाभावसमानाधिकरणस्य स्पर्शस्यसिद्धि,स्तादृशस्पर्शाधारतयाच वायुस्सिद्ध्यतीति लक्ष्यलक्षणयोर्न्नाप्रसिद्ध्यवकाशइतिभावः, केचित्तुवियाति चलायमानंतृणंस्पर्शवद्द्रव्याधिष्ठितंधृति मत्वादस्मच्छिरस्थितोष्णिखवत्, वृक्षकम्पनं तत्पत्रचलनंच स्वातिरिक्त द्रव्यप्रयोज्यं चेतनातिरिक्तक्रियात्वात् रथक्रियावदित्याद्यनुमानसाम्राज्याद्वायुस्सिद्ध्यतीतिप्राहुः, नव्यास्तुवायुं स्पृशामीतिप्रत्यक्षस्यैवप्रमाणत्वात्, नचद्रव्यप्रत्यक्षे रूपवत्वस्यकारणत्वात्तद्वाधेननप्रत्यक्षं वायोरितिवाच्यं मानाभावेन द्रव्यप्रत्यक्ष सामान्यंप्रतिरूपस्याकारणत्वा, दन्यथास्पर्शवत्वस्यैव द्रव्यप्रत्यक्षेकारणत्वमस्तु नचप्रभाप्रत्यक्षेव्यभिचारइतिवाच्यं तावतापिवायुप्रत्यक्षेव्यभिचारप्रसङ्गः नचवायुरनुमेयोनप्रत्यक्षइतिवाच्यं प्रभैवानुमेयानप्रत्यक्षे त्येवास्तुविनिगमकाभावात्, नच प्रभांपश्यामीत्यस्यैव विनिगमकत्वादितिवाच्यं वायुंस्पृशामीत्यनुभवस्यापि तत्र विनिगमकस्यसत्वादेकशेषस्य कर्त्तुमशक्यत्वा,दित्यग्रेपुनः स्फुटी भविष्यतीति, ॥ वायुंविभजतेसेति, स, वायुः, द्विविधः, द्विप्रकारकः, नित्यः, परमाणुरूपः, अनित्यः कार्य्यरूपः, अनित्यं विभजते अनित्येति, अनित्योवायु,स्त्रिविधः, त्रिप्रकारकइत्यर्थः

---

जात्यवच्छिन्नसमानाधिकरणः समानाधिकरणान्तार्थस्तेननपृथिवीत्वजलत्वावारणमिति,वस्तुतः गुरुत्वसमानाधिकरणात्यन्ताभावा प्रतियोग्यन्ताभाव प्रतियोगिपदघटित एव मूलपाठइति यथा श्रुतएवसमीचीन इति, दहनत्वादिवारणाय साक्षादिति ॥ तेजसस्तेजस्त्वं तेजस्त्वस्यनिरुक्तजातित्वं लक्षणमित्यभिप्रायादिति ॥

मू०। सनित्यानित्यभेदेनद्विविधः, अनित्यस्त्रिविधः, शरीरादिभेदेन,वायुत्वं शरीरवृत्तिउत्पाद्येन्द्रिय वृत्तिजातित्वात् सत्तावदितितत्सिद्धिः, स्पर्शोपलंभकमिन्द्रियंवायवीयंरूपादिषुमध्ये स्पर्शस्यैवाभिव्यंजकत्वात् व्यजनपवनवदिति, विषयस्तू पलभ्यमान स्पर्शाधिष्ठानभूतः॥

शरीरादिभेदेनेत्यत्रादिपदेनविषयेन्द्रिययोरुपग्रहः। ननुशरीरे वायुत्वस्वीकारे प्रमाणाभावात्त्रैविध्यानुपपत्तिरित्यतआह वायुत्वमिति, उत्पाद्यत्वं, उत्पत्तिमत्वं, तत्सिद्धिः, वायुत्वेशरीरवृत्तित्वसिद्धौशरीरेवायुत्वसिद्धि, रित्यर्थः॥ ननुत्वचीन्द्रित्वसिद्धौपुनस्तत्रवायवीयत्व सिद्धौशरीरेवायुत्वं निरुक्तहेतुनासिद्ध्यति प्रथमतस्तत्रैवमानाभावा दतस्त्वचीन्द्रियत्वंसाधयन् वायवीयत्वं साधयतिस्पर्शेति, तथाचस्पर्शोपलब्धिः करणसाध्याक्रियात्वात् छिदादिक्रियावत्, किंचस्पर्शोपलब्धिरिन्द्रियजन्योपलब्धित्वाद्रूपोपलब्धिव, दित्यनेनत्वचीन्द्रियत्वसिद्धिरितिभावः,पक्षेस्पर्शोपलम्भकत्वविशेषणादंशतोबाधवारणं स्वरूपासिद्धिवारणश्चबोध्य, मन्यथेन्द्रियत्वाश्रयेचक्षुरादौवायवीयत्वस्य स्पर्शोपलम्भकत्वस्य चासत्वेनबाधस्वरूपासिद्ध्योः प्रसंगःस्यात्,

सन्निकर्षान्तर्भावेण वाधादिवारणायेन्द्रियेति, सन्निकर्षान्तर्भा वेण व्यभिचारवारणाय हेतौद्रव्यत्वे सतीतिपूरणीयम्, प्रदीपा दौव्यभिचारवारणायैवकारस्योपादानं, स्पर्शेतरगुणाभिव्यंज कत्वाभावार्थक, मितिप्रतीपादौ रूपादिव्यंजकत्वान्न व्यभिचार इतिभावः, व्यजनपवनवदित्यस्य पूर्वमङ्गसङ्गिसलिलशैत्याभि भिव्यंजकेति पूरणीयमुपरञ्जकमिति, विषयंदर्शयतिविषय स्त्विति, उपलभ्यमानत्वं,त्वाच्प्रत्यक्षविषयत्व, मधिष्ठानत्व, माश्रयत्वं, तथाचापरोक्षविषयस्पर्शाधिकरणंवायुर्विषयइत्यर्थः सचविषयः प्राणादिभेदेनानेकविध,स्तत्र प्रमाणंलक्षयतिप्राण स्त्विति ।

मू । प्राणस्तुशरीरान्तः प्रेरणहेतु वायु,रितिवायुः॥ शब्दात्यन्ताभावानधि करणंनभः ॥

सचप्राण एकोपिस्थानभेदेन पंचसंज्ञालभतेप्राणोपानःस मानश्चोदानव्यानौचवायवइत्यमरकोषात्, इतिवायुः, वायोर्लक्ष णंविभागश्च,॥ आकाशंनिरूपयतिशब्देति,अत्राप्यत्यन्तपदव्या वृत्तिः पूर्ववत्, अथशब्दाधिकरणंनभइत्यस्यैव सम्यक्त्वेगुरुतर लक्षणानुसरणमनुचितमितिचेन्नयावच्छब्दवत्वं यत्किञ्चिच्छब्द वत्वंवालक्षणं,नाद्य एकदाऽभावात्,ज्ञानासंभवाच्च, नान्त्यः य त्किञ्चित्पदेनैकव्यक्तेरपिधर्तुं शक्यतयातस्या विनाशेप्याकाश स्यलक्ष्यस्यविद्यमानत्वात् नहिलक्षणरहितंलक्ष्यंक्वचिदपिदृष्टचर मिति,कालान्तरेपुरुषान्तरस्य लक्षणप्रकारकज्ञानासंभवाच्च, ल क्षणस्यविनाशादितरभेदानुमापकत्वाच्च, नचशब्दसामान्यव

त्वंलक्षणमतोनोक्तदोषाणामवकाश इतिवाच्यंशब्दस्यानेकत्वे न लक्षणेनानात्वव्यवहारापत्ते,रेकत्व व्यवहारानुपपत्तेश्च, शब्दस्यानित्यतयाप्रलयेशब्दस्याभावेनाव्याप्तिप्रसंगाच्च, शब्दसामान्योपलक्षितत्वस्य तथात्वेऽव्याप्तिवारणेपिप्युपलक्षितत्वस्य प्रतियोगिवैयधिकरण्यावच्छिन्न तदभावाभावरूपस्य गुरुशरीरतयैतल्लक्षणएवगौरवप्रसंगात्, स्वमतेऽत्यन्ताभावस्यध्वंस प्रागभावाधिकरणेऽसत्वात्, देशकेलानवच्छिन्न स्वरूपसम्बन्धेन शब्दाभावाधिकरणभिन्नत्वस्य लक्षणत्वाद्वा,नकोपिदोषः तादृशभेदस्यनित्यत्वादेकत्वाच्चेति, नन्वाकाशेप्रमाणाभावाल्लक्ष्यासिद्ध्यालक्षणकरणंन सम्भवदुक्तिकमित्यतआहशब्दइति ।

मू० । शब्दःक्वचिदाश्रितः गुणत्वात् रूपवदिति, नचशब्दः स्पर्शवदादाश्रयः, स्पर्शासहकारित्वात् बुद्धिवत्, नचकालाद्याश्रयो, वाह्येन्द्रियग्राह्यत्वाद्रूपवदितिपरिशेषात्तत्सिद्धि,रित्याकाशः॥

तथाचगुणत्वेनशब्दस्य क्वचिदाश्रितत्वसिद्धौकः शब्दाश्रयइतिविशेषतोऽभिज्ञानार्थमनुमानान्तरमाह नचेति,स्पर्शासहकारित्वं, स्पर्शासामानाधिकरण्यं, तथाचपृथिवीजलतेजोवायुषुशब्दाश्रयत्वाभावमितिसिद्धं, कालदिगात्ममनस्सुशब्दाश्रयत्वं निषेधयतिनचेति, तथाचपृथिव्याद्यष्ट द्रव्याश्रितत्वाभाव सिद्धौगुणश्चाश्रयंविनानतिष्ठतीति तदाश्रयआकाशएवेतिवक्तव्योभवतीति

शब्दाश्रयतयाऽऽकाशसिद्धिसम्भव इति, सचाकाशोनित्यो वि भुरेकश्च, तथाचाकाशोनित्योनिरवयवद्रव्यत्वात् परमाणुवत्, विभुत्वात् आत्मवद्वा, आकाशस्य शरीरविषययोरभावान्न विभजनं, श्रोत्रेन्द्रियन्त्वाकाशएव, नन्वेकस्याकाशस्य कथमि न्द्रियत्वमितिचेन्नोपाधिभेदात्तत्संभवात्, अथशब्दस्यगुणत्वासि द्धौ तदाश्रयतयाऽऽकाशस्य सिद्धिर्भवति गुणत्वस्यैव तत्र विवादग्रस्तत्वा त्तथाह्यत्रमीमांसकाःशब्दोन गुणःप्रत्यक्षद्रव्यगु णत्वाभाववत्त्वेसति प्रत्यक्षत्वात् घटवदित्यनेनगुणभेदस्तत्रसाध यन्ति, सिद्धेचगुणभेदेशब्दो द्रव्यंसाक्षात्सन्निकर्षग्राह्यत्वात् घट वदित्यनेनद्रव्यत्वं तत्रसाधयन्ति, तथाचशब्दस्यद्रव्यात्मकत्वात् गुणभिन्नत्वाच्चनतदाधारतया ऽऽकाशस्यसिद्ध्यवकाश इतिचेन्न प्राचीनमतेवायोरनुमेयत्वात् प्रत्यक्षद्रव्यगुणत्वाभाववत्त्वेसतिप्र त्यक्षत्वहेतोः वायु स्पर्शेसत्वेनतत्रसाध्यस्य गुणभेदस्यविरहेण प्रथमहेतौव्यभिचारप्रसंगात् तथाचप्रथमहेतुनाशब्देगुणभेदस्य सिद्ध्यसंभवात्, किंचवायुः प्रत्यक्षोनुमेयोवेति सन्देहेनिरुक्त हेतोस्सन्दिग्धानैकान्ति कत्वाद्व्याप्तिनिश्चयस्या संभवेनपराम र्षासंभवात् नचद्रव्यप्रत्यक्षसामान्यं प्रतिस्पर्शवत्वस्यकारणत्वात् वायुः प्रत्यक्षएवनसंशयस्याव सरइतिवाच्यं प्रभाप्रत्यक्षेव्यभि चारात्तादृश कार्यकारणभावस्य वक्तुमशक्यत्वात्, आकाश दिगादिचाक्षुषप्रत्यक्ष वारणाय द्रव्यप्रत्यक्षसामान्यंप्रतिरूपव त्वस्यैव कारणत्वात् वायोः प्रत्यक्षाभावात् विशेषरूपेणकार्य्य कारणभावस्या वश्यकत्वेनसामान्यकार्य्यकारणभावस्यानाव श्यकत्वेसन्देहस्य दुर्वारत्वात्, यदिचवायुंस्पृशामीत्यनुभवप्रा माण्यानुरोधाद्वायोः प्रत्यक्षमवश्यमंगीकार्य्यमित्युच्यते तदापु

ष्पंजिघ्रतीवत्तस्याप्युपपत्तेर्नवायोः प्रत्यक्षावसरावकाश इति, नचवायुःप्रत्यक्षः स्पर्शवत्वेसतिमहत्वात् घटवदित्यनुमानेन प्रत्यक्षत्वंतस्येतिवाच्यं वायुर्नप्रत्यक्षोद्रव्यत्वेसति रूपरहितत्वात् दिग्वदिति सत्प्रतिपक्षापत्तेः, किंचहन्तभोवायुप्रत्यक्षेप्यनुमाना पेक्षेति, वस्तुतस्तुशब्दोगुणोऽसर्पचक्षुर्ग्रहणायोग्यवहिरिन्द्रियग्रा ह्यजातिमत्वात् स्पर्शवदित्यनेनशब्देगुणत्वस्यैव सिद्धिसम्भवा त्, द्रव्यत्वसाध्यकद्वितीयहेतोश्च शब्दाभावेसत्वेन तत्रसाध्यावि रहात्तत्रापिव्यभिचारप्रसंगः, वस्तुतस्तुशब्दोन द्रव्यंगुणानधिक रणत्वाद्रूपवत्, शब्दोनद्रव्यंचक्षुर्ग्रहणायोग्यव हिरिन्द्रियग्रा ह्यत्वाद्गन्धवदित्यनेन, शब्दोनद्रव्यं चक्षुस्त्वग्व्यतिरेकित्वविशि ष्टवहिरिन्द्रियग्राह्यत्वात् गन्धवदित्यनेनापिद्रव्यभेदस्यैव तत्रसि द्धिसम्भवात्, वस्तुतस्तुसाक्षात्सन्निकर्षग्राह्यत्वेन यदिद्रव्यत्वंश ब्देमीमांसकाभिप्रेतंतदाशब्दोऽनित्यः साक्षाद्वहिरिन्द्रिय सन्नि कर्षग्राह्यत्वात् घटवदित्यनेनतस्या नित्यत्वप्रसंगेनशब्दनित्यता सिद्धान्तासङ्गतिः, अनित्यत्वस्वीकारेपि ननिर्वाहस्तथाहि अनि त्यद्रव्यस्य सावयवत्वनियमात् शब्दस्याशुविनाशित्वात् शब्द स्यशब्दंप्रतिसमवायिकारणत्वासंभवात् द्रव्यनाशस्यसमवायि नाशाधीनत्वात् प्रथमशब्दस्यशब्दंविनाप्युत्पत्तेरानुभविकत्वाद्वि जातीयस्यविजातीय द्रव्यसमवायिकारणत्वासंम्भवात् तथाचश ब्दोगुणएवेतितदाधारतयाऽऽकाशस्य सिद्धिसम्भवात् नचशब्द स्यद्रव्यानात्मकत्वे अमायतातिमहताप्रतिशब्दोमहानभूदित्यनेन वोधितस्य शब्देमहत्वस्यानुपपत्त्या तादृशवाक्यस्याप्रामाण्याप त्तिर्गुणेगुणानंगीकारादितिवाच्यं तत्रमहत्वंनमहत्परिमाणवत्वं, किन्त्वधिकदेशावच्छिन्नाकाशवृत्तित्व, मितिप्रामाण्यानुपपत्तिवि

रद्दादिति, अथशब्दस्यगुणत्वे ऽमूर्ततयाशतघ्नीशब्दात् घनग र्जनाच्चकथंगृहादितोमूर्तिकातृणादेर्निपातसंभवः संयोगाभावात् गुरुत्वाभावाच्चेतिचेन्नशब्दनिमित्तवायुनातत्संभवात्, एवंतर्हिवा युगुणएवशब्दोस्त्विति किमित्याकाशस्यगुणः शब्दःस्वीक्रियतइ तिचेन्नशब्दोनवायुवृत्तिःस्पर्शासमानाधिकरणत्वात्सुखवत्, स्प र्शाव्यापकत्वात्रूपवद्वे, त्यनेनशब्देवायुवृत्तित्वाभावस्यैवसिद्धि संभवात्, केचित्तुशब्दोनस्पर्शवद्विशेषगुणोऽग्निसंयोगासमवायि कारणकत्वाभाववत्वेसत्यकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवदित्य नेनवायौतदभावस्यैवासिद्धेः, पाकजरूपादौव्यभिचारवारणाय सत्यन्तं,पटरूपादौव्यभिचारवारणाया कारणगुणपूर्वकेति, जल रूपादौव्यभिचारवारणाय प्रत्यक्षेति, नदिक्कालमनसांगुणः विशे षगुणत्वाद्रूपवत्, नात्मविशेषगुणः बहिरिन्द्रियग्राह्यत्वाद्रूपवत्, इत्थञ्चशब्दाधिकरणं नवमंगगनात्मकद्रव्यंसिध्यति, नचवाय्ववय वेषुसूक्ष्मशब्दक्रमेणवायौकारणगुणपूर्वकः शब्दउत्पद्यतामिति वाच्य मयावद्द्रव्यभावित्वेनवायुविशेषगुणत्वाभावात्, अयावद् द्रव्यभावित्वंचस्वाश्रयनाशजन्यनाशप्रतियोगियत् तद्भिन्नत्वं,व स्तुविशिष्टान्यत्वंवातस्यानुगमः वस्तुवैशिष्ट्यंच स्वतादात्म्यस्वा श्रयनाशजन्यनाश प्रतियोगित्वोभयसम्बन्धेन, स्वपदंवस्तुपर, मितिवायोर्विनाशित्वादुपलभ्यमानवायुं विनापिशब्दस्योत्पत्ति दर्शनाच्चेत्याहुः । अथात्मन आकाशः संभूतआकाशाद्वायु रित्यादिश्रुत्याद्यावाभूमीजनयन्नित्यादिश्रुत्याचाकाशस्य जन्य त्वावगमाच्छब्दस्यायावद्द्रव्यभावित्वं नसंभवद्युक्तिकमितिचेन्न खंब्रह्मेतिश्रुतिविरोधेन हशश्रुत्यादेरन्यत्रतात्पर्यात्, प्रथमश्रु तेस्संहारसृष्टि क्रमेणभूतशुद्धिपरत्वाच्च, भ्रमात्मकज्ञानस्यमो

क्षहेतुत्वात् द्वितीयश्रुतेरापिपरमेश्वरभावनायांतात्पर्य्यात्, आकाशस्यनिरवयवत्वेन परममहत्परिमाणवत्वेन परमाण्वात्मवन्नित्यत्वसिद्धिसंभवात्, लाघवाच्चैकत्वसंभवादितिदिक् ॥ वादिविनोदेशंकरमिश्रास्तु शब्दाश्रयत्वमाकाशत्वं, ज्ञानानधिकरणविशेषगुणाधिकरण कर्म्मानधिकरणत्वंवा, ज्ञानासमानाधिकरणमूर्तत्वासमानाधिकरण विशेषगुणवत्वंवा, ज्ञानस्पर्शानधिकरणानधिकरणविशेषगुणवत्वंवा, द्रव्यत्वव्याप्यजात्यनाधिकरणत्वेसति विशेषगुणवत्वंवे, त्याहु, स्तच्चिन्त्यम् ॥ कालंनिरूपयति अनियतपरत्वेति ।

## सू० । अनियतपरत्वासमवायि समवायित्वरहित परत्वासमवायिसमवायी मूर्तत्वरहितः कालः ।

अयंभावः अनियतपरत्वंदैशिकतंथाहि काश्यांचैत्रस्य स्थितिदशायां मिथिलास्थमैत्राच्चैत्रः परइतिबुद्धिरुत्पद्यतेसाच

[ टि० । ] द्वितीयलक्षणे आत्मन्यतिव्याप्तिवारणाय ज्ञानानधिकरणेति, कालादिवारणाय विशेषगुणाधिकरणेति, पृथिव्यादिवारणाय कर्म्मानधिकरणेति, तृतीयलक्षणे आत्मवारणाय ज्ञानासमानाधिकरणेति, विशेषगुणविशेषणं, पृथिव्यादिवारणाय मूर्त्तत्वासमानाधिकरणेति, कालादिवारणाय विशेषेति, चतुर्थस्य ज्ञानासमानाधिकरण स्पर्शासमानाधिकरण विशेषगुणवत्वमर्थः विशेषणफलंपूर्ववद्बोध्यम् ॥ पञ्चमेपृथिव्यादिवारणायसत्यन्तं, कालादिवारणाय विशेष्यदलं, ॥

परत्वनिवंधनायदाचमैत्रः काश्यांचैत्रश्चमिथिलायां, तदातद्बु द्धिर्नोत्पद्यते, उत्पद्यतेचचैत्रोमै त्रादपरइतिदैशिकपरत्वमनिय तंभवति, कालिकपरत्वंचनानियतं किन्तुनियतमेव, तथाहिज्येष्ठेक निष्ठात्परत्वबुद्धिरेवोत्पद्यते नत्वपरत्वबुद्धिरपीति, तथाचानि यतपरत्वासमवायीचैत्रदेशयो स्संयोगस्तत्समवायित्वं दिशित द्रहितत्वेसतिज्येष्ठगतपरत्वासमवायी ज्येष्ठकालयोस्संयोगस्तत्स मवायित्वेसतिमूर्त्तत्वरहितोयस्सकालइति समुदितलक्षणार्थः अ त्रदिश्यतिव्याप्तिवारणाय प्रथमसत्यन्तं, आकाशात्मन्यतिव्या प्तिवारणाय द्वितीयसत्यन्तं, ज्येष्ठेऽतिव्याप्तिवारणाय मूर्तत्वर हितत्वोपादान, मितिबोध्यं, नतुकालेप्रमाणाभावाल्लक्ष्यासिद्धौ लक्षणकरणमनुचितमित्यतः कालसाधकमानमाह गगनमिति, अनियतपरत्वासमवायिसमवायित्वा भावविशिष्टत्वेसतिज्ञानस मवायित्वाभावविशिष्टद्रव्यत्व व्याप्यधर्म्मावच्छिन्नप्रतियोगिता कभेदवादित्यर्थः दिगात्मकद्रव्यभेदभादायार्थान्तरवारणायप्रथम सत्यन्तम्, चैत्रादिद्रव्यभेदमादायार्थान्तरवारणायवा, यत्रानि यतपरत्वंनोत्पन्नं तद्द्रव्यभेदभादाय मनोभेदमादायवार्थान्तरवा रणायद्वितीयसत्यन्तम्, आत्मभेदमादायार्थान्तरवारणाय तृतीय म्, विशिष्टान्तंद्रव्य ।

**मू० । गगनमनियतपरत्वासमवायिसमवायित्व रहितमूर्त्तत्वरहितज्ञानसमवायित्वरहितद्रव्यान्यदमूर्त्तत्वादात्मवदितितत्सिद्धि, रितिकालः ॥**

विशेषणम् रूपादिकमादायार्थान्तरवारणाय द्रव्यपदंसा ध्यघटकमितिबोध्यम् अत्रज्ञानसमवायित्वं समवायसम्बन्धेन ज्ञानवत्त्वं नतुज्ञानसमवायिकारणत्वं गौरवादितिध्येयम्। तथा च गगने तादृशद्रव्यसिद्धौ भेदप्रतियोगितयाकालस्य सिद्धिस म्भवान्नलक्षणकरणमनुचितमितिभावः सचकालोविभुरेकोनि त्यश्च नचैकत्वेलक्षणादिव्यवहारोनस्यादितिवाच्यम् उपाधिभे दाद्व्यवहारसम्भवात् उपाधिश्चस्वजन्यविभागावच्छिन्नकर्म इ त्यन्यत्रविस्तरः॥

दिशंनिरूपयति० अनियतेति आकाशादावतिव्याप्ति वारणायसमवायीत्यन्तम् चैत्रादावतिव्याप्तिवारणायमूर्त्तत्वर हितेति ननुदिक्सत्त्वेलक्षणंसम्भवति तत्रैवप्रमाणाभावादित्यत आह कालेति तथाच विशेषगुणसामान्याभावविशिष्ट मूर्त्तसा मान्यभेदविशिष्ट द्रव्यत्वावच्छिन्नप्रतियोगिताकभेदस्साध्यः अ त्रगुणरहितद्रव्यस्याप्रसिद्ध्या साध्यासिद्धिवारणायविशेषेति गुणविशेषणम् विशेषगुणवत्ताच पृथिवीजलतेजोवाय्वाकाशा त्मस्वेव इतिनसाध्याप्रसिद्धिरिति। आकाशात्मभेदमादायार्था न्तारवारणाय प्रथमविशिष्टान्तम्

मू०। अनियतपरत्वासमवायिस मवायिनीमूर्त्तत्वरहिता दिक्काली वि शेषगुणरहितामूर्त्तद्रव्यान्यः मूर्त्तत्वरहि तत्वात् आकाशवदिति तत्सिद्धिः॥

द्रव्यविशेषणम्। मनोभेदमादायार्थान्तरवारणाय द्वितीय

विशिष्टान्तन्द्रव्यविशेषणम् रूपादिभेदमादायार्थान्तरवारणायद्र व्यस्यभेदप्रतियोगितयोल्लेखः तथाचकालवृत्तिभेदप्रतियोगित यादिक्सिद्धिःसाचविभ्वीलाघवादेकानित्याच ननुतस्याएक त्वेप्राच्यादिव्यवहारोनस्यादितिचेन्नउपाधिभेदात्तदुपपत्तेःतथा हि० यत्पुरुषस्योदयसन्निहितादिक् सातत्पुरुषस्यप्राची एवमुदय गिरिव्यवहितायादिक् साप्रतीची एवंयत्पुरुषस्यसुमेरुसन्निहिता यादिक् सोदीची तद्व्यवहितात्ववाची केचित्तुदैशिकपरत्वापरत्वे दूरत्वान्तिकत्वरूपंअस्मादयंपरइतिबुद्धे रसाधारणकारणं दिगेव दिक्परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया लाघवादे कादिक् सिद्ध्यतीति अत्रदिशिद्रव्यत्वसिद्धिस्त्वाचार्यानुमानेनै वभवतीतिबोध्यम् एवंकालिकपरत्वमपरत्वंच ज्येष्ठत्वकनिष्ठ त्वरूपम् ज्येष्ठोऽयमस्मात्परइतिबुद्धेरयमस्मादपरोइति बुद्धेश्चासा धारणंकारणंकाल एवकालिकपरत्वापरत्वयोरसमवायिकारणसं योगाश्रयकालएवसचलाघवादेकः सिद्ध्यतीति शेषः पूर्ववदि तिप्राहुः ॥

## ॥ ज्ञानात्यन्ताभावरहितात्मा० ॥

आत्मानंनिरूपयति ज्ञानेति० अत्यन्तपदव्यावृत्तिः पू र्ववत् यत्तु ज्ञानवदात्मेति तत्तुच्छम् मुक्तात्मन्यव्याप्तेः सुषु प्तिदशायाञ्चाव्याप्तेः तदानींज्ञानस्यतत्रतत्रासत्वात् स्वमते ऽत्यन्ताभावस्यध्वंसप्रागभावाधिकरणेसत्वायोगाञ्चातिव्याप्तिः अथवाज्ञानाऽभावस्य निरवच्छिन्नस्वरूपसंबंधावच्छिन्नप्रति योगिताकाऽभावस्य विवक्षितत्वात् वा ज्ञानाधिकरणभेदव द्वृत्तित्वविशिष्टस्य ज्ञानाऽभावस्याभाववदात्मेत्यस्य लक्ष

णसमन्वयसम्भवात् ज्ञानाधिकरणभेदरहितत्वस्य परमार्थत्वा दिति॰ नचज्ञानवत्त्वस्योपलक्षणविधयानिवेशे यत्तुकल्पस्या पिनिर्दोषत्वमितिवाच्यम् उपलक्षणत्वस्यप्रयोगिवैयधिकरण्याव च्छिन्न तदभावाऽभाववत्त्वस्य गुरुशरीरतयागौरवापत्ते र्ज्ञान स्यानेकत्वेन लक्षणे अनेकत्वव्यवहारापत्तेः एकत्वव्यवहारानु पपत्तेश्च लक्षणेलक्ष्यतावच्छेदकसमानाधिकरणाऽभावप्रतियो गित्वापत्तेश्च परमेश्वरेजन्यज्ञानाभावस्य जीवात्मनि नित्यज्ञा नस्यभावसत्त्वात् जीवात्मनिचालिनिन्यायेन तत्तज्ज्ञानाभावस्य सत्त्वाच्चेति ॥

मू॰ । परत्वासमवायिसमवायित्व रहितशब्दासमानाधिकरणकार्याश्रयोवा। ज्ञानंक्वचिदाश्रितं गुणत्वाद्रूपवत् तत्सि द्धिः । नचशरीरेन्द्रियाणां तदाश्रितत्वं कार्यत्वात् घटवत् ॥

केवलजीवात्मनोलक्षणमाह परत्वेति॰ कार्यमदृष्टादिकं पृथिवीजलतेजोवायु दिक्कालमनः प्रभृतिषु अतिव्याप्तिवारणायर हितान्तं कार्याश्रयविशेषणम् आकाशादावतिव्याप्तिवारणाया समानाधिकरणान्तंकार्यविशेषणम् ननुशरीराद्यतिरिक्तात्मनि प्रमाणाऽभावाल्लक्ष्यासिद्धौ लक्षणकरणमनुचितं नचाहंसुखीत्या दिप्रत्यक्षस्यैव शरीराद्यतिरिक्तात्मनि प्रमाणत्वमितिवाच्यम् विप्रतिपन्नम्प्रत्यहंबुद्धिरेव आत्मा इतिप्रथमतोवक्तुं नशक्यते तथाहिस्थूलोहं कृशोहम् श्यामोहंगौरोहम् सुन्दरोहमित्यादि

प्रत्यक्षविषयत्वस्यशरीरेपि अनुभूयमानत्वात् अतः शरीरातिरिक्तात्मनि अनुमानप्रमाणमाह० ज्ञानमिति तत्सिद्धिर्ज्ञानाधारतया आत्मसिद्धिरित्यर्थः ननुशरीरेन्द्रियाणामेवज्ञानत्वमस्तु किमितिशरीराद्यतिरिक्तात्मस्वीकारेणेत्यत आह० नचेति० तथाच शरीरंनज्ञानवत् कार्यत्वाद्घटवत् वहिरिन्द्रियाणिनज्ञानवन्तिकार्यत्वाद्घटवत् मनोनज्ञानवत् करणत्वाच्चक्षुर्वत्० तथाच० शरीरादौज्ञानाभावसिद्धौ तेषांज्ञानाश्रितत्वाऽसंभवात् ज्ञानाधारतयात्मसिद्धिरितिभावः शरीरादौज्ञानादिकार्याश्रयत्वे बाधकमप्याह० कार्येति कार्यस्यशरीरादेरित्यर्थः तदाश्रयत्वे स्वर्गार्थिनास्वर्गेच्छूनां ज्योतिष्टोमादिव्यपदेशोव्यवहारोनस्यात् तत्तत्काम

सू० । कार्यस्यतदाश्रयत्वेस्वर्गार्थिनां गयाज्योतिष्टोमादिव्यपदेशोनस्यात् न चमनसस्तदाश्रयत्वं करणत्वाच्चक्षुर्वत्

नयातत्तत्कामनाविषयोपाये प्रवृत्तिर्नस्यादित्यर्थः ज्योतिष्टोमादावित्यत्रादिपदेनवेदाध्ययन तदर्थविचारात्ममीमांसाध्ययन आत्यन्तिकदुःखनिवृत्तिप्रयोजकान्वीक्षिक्यादिशास्त्राध्ययनब्रह्मचर्यादीनाम्परिग्रहः अयंभावः शरीरेन्द्रियाणां आशुविनाशितयातद्गतगुणादेरपितथात्वात् जन्याधारकगुणनाशस्य आश्रयनाशाधीनत्वात् धर्म्मादीनांस्वर्गादिसाधकफलकत्वाऽभावेन स्वर्गार्थितयायागादौ गयापिन्डदानादौच प्रवृत्त्यनुपपत्तिः प्रवृत्तेरिष्टसाधनताधीसाध्यत्वात् इष्टस्यचैतच्छरीरावच्छेदेनासंभवात् इति अविनाशीआत्मैव ज्ञानधर्माद्याश्रयइति० परेतु०

जातमात्रस्य स्तनपानादौप्रवृत्तिर्नस्यात् तदानीमिष्टसाधनता धीविरहात् ममतुपूर्वजन्मानुभूतेष्टसाधनतानुभवाहितसंस्कारज नितेष्टसाधनतास्मरणधीर्निराबाधात् नचोद्बोधकाभावइतिवा च्यम् अनायत्याजीवनादृष्टस्यैव तदानीमुद्बोधकत्वादितिप्राहुः केचित्तुशरीरेज्ञानवत्त्वस्वीकारे बाल्यावलोकितघटादे र्युवावस्था यांस्मरणानुपपत्तिः स्मृतिंप्रतिसमवायेनस्वसमानविषयकानुभव जन्यसंस्कारस्यहेतुत्वात् तस्यशरीरनिष्ठत्वात् बाल्यशरीरस्यतदा नींमभावेनसंस्कारस्याभावात् नहिचैत्रानुभूतमर्थं मैत्रःस्मरतीति नचविषयतासंबन्धेनैवास्तु कार्यकारणभावइतिवाच्यं मैत्रसंस्का रात् चैत्रस्यस्मरणपत्तेर्विपयस्याविशेषात् तदीयत्वनिवेशेचारू्रा नुपपत्तेस्तादवस्थ्यात् नचपूर्वशरीरगतसंस्कारस्यो त्तरशरीरेसं क्रमस्वीकारेनोक्तापत्तिरितिवाच्यम् वासनासंक्रमेमानाभावात् नचयद्द्रव्यंयद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति तदुपादा नोपादेयत्वासिद्धौ तद्गतगुणसंक्रमस्यापिसत्वात् दृष्टंचशुक्लपटध्वं सजन्येखंडशुक्लपटे इतिवाच्यम् भस्मनितद्व्यभिचारात् तत्रवि जातीयरूपाददर्शनात् एवमिन्द्रियादौज्ञानादिस्वीकारे चाक्षुषा नुभवविषयस्य चक्षुर्विनाशदशायां स्मरणानुपपत्तिरनुभवकर्तु रभावात् अन्यत्सर्वंपूर्ववदित्याहुः ॥ ननुमनसोनित्यत्वात् तस्य ज्ञानाश्रयत्वस्वीकारे नोक्तदोषाणामवकाशइत्यतआह० नचम नसइति० केचित्तुमनसइन्द्रियत्वेमानाभावात् करणत्वासिद्धौ स्वरूपासिद्धिः नचमनः षष्ठेन्द्रियाणीतिभगवद्वचनं प्रमाणमि तिवाच्यम् अनिन्द्रियेणापिमनसापष्ठसंख्यापूरणाविरोधात् न हीन्द्रियगतसंख्यापूरणमिंद्रियेणैवभवतीतिनियमः यजमानप ञ्चमामिडांभक्षयन्तीत्यत्र ऋत्विक्गतपञ्चत्वसंख्या अनृत्विजा

पियजमानेन । वेदानध्यापयामास महाभारतपञ्चमान् इत्या दौवेदगतपञ्चत्वसंख्याया अवेदेनापिमहाभारतेन पूरणदर्शनात् इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्चपरंमनः इत्यादिश्रुत्यामनसो ऽनिन्द्रियत्वावगमाच्चेत्याहुस्तन्नइन्द्रियाणां मनश्चास्मिभूतानाम स्मिचेतना इतिभगवद्वचनविरोधात् नहिविजातीयगतनिर्द्धार णात्वंप्रतीयतइति वेदानांसामवेदोस्मिदेवानामस्मिवासवः इन्द्रि याणांमनश्चास्मि इत्यादिप्रकरणविरोधाच्चेति वस्तुतस्तु मनसै वानुद्रष्टव्यमितिश्रुत्यामनसः करणत्वप्रतिपादनात् मनः षष्ठे न्द्रियाणीत्यस्य यथाश्रुतार्थपरत्वमेवसम्यक् इन्द्रियेभ्यः परेत्यत्र इन्द्रियभेदविशिष्टार्थभेदस्य मनसिसत्वेनहिमनसि इन्द्रियसा मान्यभेदः सिद्ध्यति० घटभेदविशिष्टपटभेदस्य घटेसत्वेपिघट सामान्यभेदस्य घटेऽसंभवात् तथामनसइन्द्रियत्वंसिद्धमिति न नुमनसि इन्द्रियत्वस्वीकारेपि नित्यत्वेमानाऽभावात् तस्यानित्य त्वेच तन्मनोऽसृजदितिश्रुतेः प्रमाणत्वाच्चेतिचेन्न मनोनित्यं नि रवयवद्रव्यत्वात् परमाणुवत् मनोनित्यंद्व्यणुकान्यत्वेसत्यणुत्वा त् परमाणुवादित्याद्यनुमानस्यप्रमाणत्वात् अणुर्म्मनोज्ञानानामयौ गपद्यात् मनसउत्पत्तिबोधकश्रुतेरन्यार्थकत्वात् तथाहि० तत् ब्रह्ममनः मनसोविषयेन्द्रियेणसंबन्धमसृजत् असंपादयदित्यर्थः वस्तुतस्तुद्वितीयलक्षणम् जीवात्मपरमात्मसाधारणम् ननुपरमे श्वरेजन्यज्ञानादेरभावसत्वादव्याप्तिरितिवाच्यं प्रतिष्ठितंप्रपूज ये दित्यनेनप्रतिष्ठाविधानेनप्रतिमायां अहंकारममकारौभवतः प्रतिपादितश्चप्रथमस्तवके कुसुमाञ्जलिग्रन्थे निमित्तभेदसंसर्गा दुद्भवादयः देवतासन्निधानेनप्रत्यभज्ञानतोपिवा इत्यनुसूयमेवे ति तथाचाहंकारात्मकममकारात्मकजन्यज्ञानमादायपरमेश्वरे

लक्षणसमन्वयसम्भवात् अथतत्साक्षादपरोक्षात् ब्रह्मेतिश्रुत्या सत्यज्ञानमानन्दं ब्रह्मेत्यादिश्रुत्याचआत्मनोज्ञानात्मकत्वावधारणाल्लक्षणद्वयेप्यात्मन्यव्याप्तिर्ज्ञानाऽभावस्यसत्वात् इतिचेन्न सर्वज्ञतातृप्तिरनादिबुद्धिः स्वतन्त्रतानित्यमलुप्तशक्तिः अनन्तशक्तिश्च विभोर्विधिज्ञाषडाहुरङ्गानि महेश्वरस्येत्यादिस्मृतीनां यस्सर्वज्ञः ससर्ववित् सऐच्छदित्यादि ज्ञानेच्छाविशिष्टपरमेश्वरबोधकश्रुतिविरोधभयेन पूर्वश्रुति घटकज्ञानपदस्य ज्ञानाश्रयार्थकत्वादव्याप्त्यसंभवात् एतेनब्रह्मणः सुखरूपत्वमपिनिरस्तं असुखमितिश्रुतेश्च सुखबोधकपदघटितश्रुतिघटकसुखपदस्य दुःखाभाववदर्थकत्वात् सुखासत्वेपिभारोत्तारदशायां वाहिकस्यसंप्रतिसुखी अहमित्यनुभवात् दुःखाभावेसुखोपचारात् एतेनप्रकृतिरेवकर्त्रीज्ञानादीनां प्रकृतावेवस्वीकारादितिसांख्यमतमपास्तं चेतनोहंकरोमिजानामि इच्छतियततेकरोतिजानाति सकरोतीत्याद्यनुभवाच्चैतन्याश्रयएव ज्ञानेच्छाकृतीनां स्वीकारस्यावश्यकत्वात् प्रकृतिरचेतनापरिणामित्वात् प्रकृतिर्नज्ञानेच्छाद्याश्रया अचेतनत्वात् घटवदित्याधिकंवर्धमानेद्रष्टव्यमिति

मू० । सद्विविधः ईश्वरानीश्वरभेदात् तत्रेश्वरःसर्वज्ञःएकः । अङ्कुरादिकं सकर्तृकंकार्यत्वात् घटवदितितत्सिद्धिः ॥

आत्मानंविभजतेसइति० सआत्माद्विविधः द्विप्रकारक ईश्वरानीश्वरभेदात् जीवात्मपरमात्मभेदात् नन्वीश्वरेमानाभा

वात्० विभागानुपपत्तिरित्यतआह अङ्कुरादिकमिति ननुअ
ङ्कुरत्वंयदिजन्यत्वंतदाहेतुपक्षतावच्छेदकयोरैक्यप्रसंगःनचेष्टाप
त्तिः हेत्ववच्छेदेनसाध्यसंशयसत्त्वेन व्याप्तेरनिश्चयात् परामर्शा
संभवात् दृष्टान्तानुपपत्तेश्चेतिचेन्न उत्पत्तिमत्त्वस्याङ्कुरपदार्थ
तावच्छेदकत्वात् प्रागभावप्रतियोगित्वात्मककार्यत्वस्यचहेतुत्वा
द्धेतुपक्षतावच्छेदकयोर्भेदसंभवात् उत्पत्तिमत्त्वञ्च स्ववृत्तिध्वंस
प्रतियोग्यवृत्तित्वस्ववृत्तित्वोभयसंबन्धेन समयवत्त्वम् नचपक्षता
वच्छेदकस्यध्वंसेसत्त्वेन तत्रसाध्यस्याभावेन बाधापत्तिरितिवा
च्यत् जन्यभावस्यपक्षत्वात् ध्वंसेभावत्वविरहेणबाधापत्त्यसंभ
वात् नचतथापिध्वंसेप्रागभावप्रतियोगित्त्वेस्य हेतोस्सत्वेनव्यभि
च रइतिवाच्यम् प्रागभावप्रतियोगिभावत्वस्यहेतुत्वात् नचपक्ष
तावच्छेदकाश्रयेघटादौसाध्यस्य सत्त्वेनांशिकसिद्धिसाधनाप
त्तिरितिवाच्यम् जन्यकृत्यजन्यजन्यभावत्वस्य पक्षतावछेदकत्वात्
कृतौजन्यत्वानवेशे पक्षासिद्धिप्रसंगात् जन्यमात्रस्यपरमेश्वरकृ
तिजन्यत्वात् परमततूपरञ्जकमेवतत् उपरञ्जकस्यापिपक्षविशेष
णत्वात् सकर्तृकत्वञ्चस्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृ
तिमज्जन्यत्वं प्रकृतेसाध्यताचतादृशकृतिजन्यत्वस्यैव कार्यंप्रति
कृतिमत्त्वेन कारणत्वापेक्षयाकृतित्वेनकारणतायाः लघुशरीरत्वा
त् अत्रकृतित्वजातेः कारणतावछेदकत्वात् नचस्वत्वस्याननुगत
त्वात् स्वपदेनद्व्यणुकग्रहणे दृष्टान्तासिद्धिः घटादिग्रहणेचबाधा
पत्तिरितिवाच्यं स्वविषयसमवेतत्व स्वजन्यत्वोभयसंबन्धेनाप
रोक्षज्ञानादिमत्त्वस्यसाध्यत्वात् स्वपदस्यसंसर्गघटकतयापरिचा
यकत्वात् जन्यत्वंचस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वम् एतदति
रिक्तस्यतस्यदुर्वचत्वात् अव्यवहितोत्तरत्वञ्च स्वाधिकरणसम

यध्वंसानधिकरणत्वे सतिस्वाधिकरणत्वं स्वाधिकरणक्षणध्वंसा धिकरणत्वंवा तथाच नित्यकृत्यव्यवहितोत्तरत्वस्याप्रसिद्ध्या तज्जन्यत्वासंभव इति तुनाशंक्यंस्वाधिकरणविशिष्टत्वस्याव्यव हितोत्तरत्वात् वैशिष्ट्यञ्चस्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्व स्वध्वंसाधिकरणत्वोभयसंबन्धेन स्वपदमधिकरणीभूतक्षणपरं तथाचनाप्रसिध्यवकाशः उत्पत्तिकत्वञ्च पूर्वोक्तोभयसंबन्धेन समयविशिष्टत्वं तथाचायंसंप्रयोगः जन्यकृत्यजन्यजन्योभावः अपरोक्षज्ञानचिकीर्षाकृतिमान् प्रागभावप्रतियोगिभावत्वात् घट वत् तादृशकृत्याधारतया परमेश्वरः सिद्ध्यतीति अत्रकेवलकृ तिजन्यत्वस्य साध्यत्वेसमीहितसिद्धिसंभवेपि त्रितयजन्यत्वस्य साध्यत्वमैच्छिकंबोध्यं ननुप्रत्येककृतिजन्यत्वस्यसाध्यत्वे अस्म दादिकृतिजन्यत्वस्यादृष्टद्वारा अङ्कुरादौसत्वेनार्थान्तरप्रसंगात् अदृष्टस्यकार्यमात्रंप्रतिजनकत्वादितिचेन्न अदृष्टाद्वारकजन्यत्वस्य विवक्षितत्वात् स्वविषयसमवेतत्व स्वविषयत्वोभयसंबन्धावच्छि न्नाविषयता स्वसंबन्धावच्छिन्नावा कृतित्वावच्छिन्नजनकतानि रूपितसमवायसंबन्धावच्छिन्नजन्यत्वस्य साध्यत्वान्नकोपिदोषः अथकेवलोपादानगोचरापरोक्षज्ञानजन्यत्वस्य साध्यत्वपक्षेयोगि प्रत्यक्षात्मकापरोक्षज्ञानविशिष्टत्वस्य निरुक्तसाध्यत्वस्याङ्कुरेस त्वेनार्थान्तरापत्तिवारणाय कृतिजन्यत्वस्याप्यावश्यकत्वादिति ध्येयम् ॥ अङ्कुरंकर्त्रजन्यंशरीराजन्यत्वात् आकाशवदित्य नेनसत्प्रतिपक्ष इतिचेन्न अप्रयोजकत्वात् अर्थात् शरीराजन्यत्वं कर्त्रजन्यत्वव्यभिचारिनवेति संशयनिवर्त्तकानुकूलतर्करहितत्वेन प्रतिबन्धकीभूतविपरीतकोटिव्याप्यवत्तानिश्चयस्यासंभवात् मम तुकृतित्वेनकार्यत्वेन कार्यकारणभावस्यैवानुकूलतर्कस्यसत्वात्

व्याप्तिनिश्चयसम्भवेनसाध्यसिद्धिर्निराबाधा एवंयतोवाइमानि भूतानिजायन्ते येनजातानिजीवन्तियत्प्रेत्याभिसंविशन्ति तद् ब्रह्मेति द्यावाभूमीजनयन्देवएकआस्तेविश्वस्यकर्त्ताभुवनस्यगो प्ताइति यः सर्वज्ञः ससर्ववित् यस्यज्ञानमयंतपः यस्मादेतद्ब्रह्म नामरूपमन्नञ्चजायतेइत्यागमानां पिताहमस्यजगतो माताधाता पितामहइत्यादिस्मृतीनाञ्च तत्रप्रमाणत्वात् इतिदिक्।

मू० । द्वितीयस्त्वहंप्रत्ययवेद्यः सच नाना व्यवस्थावचनात् ।

इति आत्मा ।

अनीश्वरःकइत्याशंकायामाह द्वितीयेति अहंप्रत्ययवेद्यो विषयः इदमुपलक्षणंधर्माधर्म्माश्रयः सुखदुःखज्ञानादिमत्वेन प्रत्यक्षविषयः अदृष्टात्यन्ताभावानधिकरणमनीश्वरइति अनी श्वरंविभजते० सचेति सअनीश्वरः जीवस्यैकत्वे एकस्यजातेस र्वेजायेरन् एकस्यमृतेसर्वेम्रियेरन् एकस्यसुखिनिसर्वेसुखिनःस्युः चैत्रोजानातिनमैत्रः मैत्रोमूर्खोनचैत्रः मैत्रोधनीनमैत्रः जनकशुक व्यासवामदेवादयोमुक्ता अन्येबद्धाइत्यादि व्यवस्थानुरोधादनी श्वरोनानाइत्यर्थः अत्रचैकजीववादिनो वेदान्तिनस्तु एकएव हिभूतात्मादेहेदेहेव्यवस्थितः एकधाबहुधाचैव दृश्यतेजलचन्द्र वत् सहिसर्वेषुभूतेषुस्थावरेषुचलेषुचवसत्येकोमहानात्मायेनसर्व मिदंततमेकोयमात्माजगति सकेनबहुधाकृतः पृथग्वदतिवात्मानं ज्ञानादेकः प्रवर्त्तते । एकएवयथासूत्रं सुवर्णेवर्त्ततेपुनः मुक्काम णिप्रवालेषु मृण्मयेरजतेषुच तद्वद्गोषुमनुष्येषुतद्वद्धस्तिमृगादिषु

एकोयमात्माविज्ञेयः सर्वत्रैषव्यवस्थितः इत्यादिवचनादेकएवा त्माइतिवदन्तितच्चित्यम् ।

मू० । स्पर्शरहितत्वेसतिमूर्त्तं मनः विशेषगुणात्यन्ताभावाधिकरणत्वे सति मूर्तंवा पृथिवीवृत्तिः पृथिवीत्वरहितवृत्ति वृत्तित्वरहितगुणत्वव्याप्यजातिमान् वि शेषगुणः ।

मनोनिरूपयत्तिस्पर्शेति पृथिव्यादिवारणायसत्यन्तं आ काशादिवारणायमूर्त्तेति लक्षणान्तरमाहविशेषेति पृथिव्यादिवा रणायसत्यन्तंकालादिवारणाय मूर्त्तेतिमनसोलक्षणघटकत्वादत्रै वविशेषगुणं निरूपयतिपृथिवीति पृथिवीनिरूपितसमवायसंब न्धावच्छिन्नवृत्तितावत् पृथिवीत्वाऽभाववन्निरूपित वृत्तिताभाव वद्गुणत्वव्याप्यजातिमत्वं विशेषगुणत्वमितिफलितम् तथाचपृ थिवीवृत्तिपृथिवीत्वरहितवृत्तिसंयोगविभागादिस्तद्वृत्तित्वरहि तत्वस्य गुणत्वव्याप्यत्वस्य नीलत्वपीतत्वगंधत्वसुरभित्वासुर भित्वमधुरत्वा पाकजानुष्णाशीतस्पर्शत्वशब्दत्वज्ञानत्वादिजातौ सत्वाल्लक्षणसमन्वयः रूपरसगन्धस्पर्शशब्दबुद्धिसुखदुःखेच्छा यत्नधर्माधर्म्मभावनाख्यसंस्काराश्चैतेविशेषगुणाः संयोगादाव तिव्याप्तिवारणायरहितान्तं गुणत्वव्याप्यजातिविशेषणम् घट त्वादिजातिमादाय घटादावतिव्याप्तिवारणाय गुणत्वव्याप्ये तिसमवायेन गुणत्वव्याप्यत्वलाभायजात्युपादानमन्यथानील

त्वादिजातिमत्वस्य कालिकेनक्रियादौसत्वेन तत्रातिव्याप्तिवार णमशक्यमिति ॥

मू० । आत्मप्रतीतिःकरणसाध्या अपरोक्षप्रतीतित्वात् रूपोपलब्धिवदिति तत्सिद्धिरितिमनः ॥ इतिद्रव्यपदार्थः समाप्तः ॥ संयोगाजन्यसंयोगासमवायिसमवेतत्वरहितसंयोगा संयोगसमवेतवान् गुणः ॥

मनसिप्रमाणंदर्शयति आत्मेति गुणंनिरूपयति संयोगेति सत्तामादायातिव्याप्तिवारणाय रहितान्तं समवेतविशेषणम् संयोगजसंयोगं प्रतिसंयोगस्याप्यसमवायिकारणत्वात् तत् समवेतत्वस्य गुणत्वेसत्वेनासम्भववारणाय संयोगे संयोगाजन्यत्वविशेषणं तथाच संयोगजसंयोगभिन्नसंयोगंप्रत्यसमवायिकारणं क्रियैवतत्समवेतत्वरहितत्वस्य गुणत्वे सत्वात् तमादाय लक्षणसमन्वयः घटत्वादिकमादायातिव्याप्तिवारणाय संयोगसमवेतत्वस्योपपादानं असंयोगसमवेतत्वस्यानुपादाने संयोगसमवेतत्वेन झटित्युपस्थितिकसंयोगत्वस्य रूपादावसत्वेनाव्याप्तिशंका स्यात् स्याद्वा संयोगनिरूपितसंबन्धावच्छिन्नवृत्तित्वविशिष्टस्य गुणत्वस्यापिरूपादावसत्वेनाव्याप्तिरतः तादृशवृत्तित्वोपलक्षणतया निवेशसूचनाय तस्योपादानं किंच गुणत्वलक्षणपूर्वकंगुणलक्षणं समवेतान्तं गुणत्वलक्षणमत्रतस्यानुपादानेसंयोगत्वेऽभि

घातत्वेनोदनत्वे चातिव्याप्तिः अतः तदुपादानंतथाचसंयोग त्वादौ असंयोगसमवेतत्वविरहान्नातिव्याप्तिरितिअत्र संयोगाज न्यसंयोगासमवायीत्यनेन क्रियायालाभस्तथाचक्रियासमवेतत्व रहितसंयोगसमवेतासंयोगसमवेतज्ञानगुणइति फलितार्थं इति यत्तु द्रव्याश्रितत्वं गुणत्वंतन्न कर्मरायतिव्याप्तेः नचकर्मभिन्नत्वे सतिदेयं सामान्यादावतिव्याप्तेः नच सामान्यवत्वेसत्यपिदेयं क पालाश्रितघटादावतिव्याप्त्यापत्ते निर्गुणत्वे सति द्रव्याश्रितत्वे सत्ति कर्मभिन्नोगुणइतिपर्यवसितलक्षणार्थं इत्यपिन उत्पत्तिका लीनघटादावतिव्याप्तेर्गुणलक्षणेगुणस्य प्रवेशेनात्माश्रयप्रसङ्गश्च स्यात् अथद्रव्यत्वव्याकतावच्छेदकजातिमान् गुणइतितस्यपर्यव सितमितिचेन्न द्रव्यलक्षणेगुणस्यगुणेद्रव्यत्वस्य प्रवेशेनान्योन्या श्रयप्रसङ्गात् उत्पत्तिकालीनघटादावन्तर्भावेण व्यापकताभङ्गः प्रतियोगिवैयधिकरण्यप्रवेशे आचार्यलक्षणापेक्षयागौरवापत्तेः गु णत्वेप्रमाणमाह रूपमिति ।

मू० । रूपं संयोगजन्यसंयोगासमवायिसमवेतत्वरहितसंयोग समवेतवत् रूपत्वरहितसंयोगजन्यत्वरहितत्वात् संयोगवदिति गुणत्वसिद्धिः सचतुर्विंशति प्रकारो रूपादिभेदेन रसासमवेतनीलपीतसमवेतवद्रूपं गुणत्वे सति चक्षुर्ग्राह्यं रूपम् ॥

सत्तामादायार्थान्तरवारणायसत्यन्तं क्रियानिरूपित समवायसंबन्धावच्छिन्नवृत्तित्वाभाववदर्थकमिति संयोगवदित्य स्य संयोगजसंयोगवदित्यर्थः तेनाक्रियाजन्यसंयोगहेतोरसत्वे ऽवच्छेदकावच्छेदेनदृष्टान्तासिद्धिरित्यस्यानवकाशइति वादि विनोदे शङ्करमिश्रास्तु नित्यवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्य जातिर्गुणत्वमित्याहुः गुणान् विभजते सचेतिसगुणः रूपरस गन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोग विभागपरत्वापरत्वबुद्धि सुखदुःखेच्छाद्वेषयत्नगुरूत्वद्रवत्वस्नेहसंस्कार धर्माधर्मशब्दभेदेन चतुर्विंशतिप्रकारइत्यर्थः गुणनिरूपणेप्राथम्यात्प्रथमंरूपंनिरूप यतिरसेति सत्तागुणत्वमादायार्थान्तरवारणाय रसासमवेतेति अन्यत्सर्वंपूर्ववत् लक्षणान्तरमाह गुणत्वेसतीत्तिरूपत्वेघटादौ चातिव्याप्तिवारणाय गुणत्वेसतीति नचसंयोगेऽतिव्याप्तिः तस्यापिचक्षुर्ग्राह्यत्वादितिवाच्यं विशेषगुणत्वेसतीत्यस्यैव सत्य न्तेनविवक्षितत्वात् संयोगस्यसामान्यगुणतयातिव्याप्तिविरहात् नच सांसिद्धिकद्रवत्वेचातिव्याप्तिः तत्रविशेषगुणत्वस्य चक्षुर्ग्रा ह्यत्वस्यच सत्वादितिवाच्यं विशेषगुणेतरवृत्तिगुणत्वसचान्य जातिशून्यत्वस्यसत्यन्तेन विवक्षितत्वात् विशेषगुणेतरनैमित्तिक द्रवत्ववृत्तिद्रवत्वत्वजातिशून्यत्वस्यसांसिद्धिकद्रवत्वे विरहेणाति व्याप्तिविरहात् नच परमाणुवृत्तिरूपेभर्जनकपालस्थवन्हिगतरू पादौ चाव्याप्तिश्चक्षुर्ग्राह्यत्वस्यासत्वादितिवाच्यं चक्षुर्ग्राह्यताव च्छेदकधर्मवत्वस्य विवक्षितत्वात् तथाच तादृशस्यरूपत्वस्य रूपे सत्वान्नाव्याप्तिरिति ॥

मू० । नचरूपग्राहकंचक्षुः चक्षुर्ग्रा

ह्यंरूपमित्यन्योन्याश्रयः नयनगोलाधि ष्ठानत्वेन चक्षुर्निरूपणात् ॥

द्वितीयलक्षणे अन्योन्याश्रयमाशंकतेनचेति उत्तरपत्ति नयनेति नयनगोलमधिकृत्य तिष्ठतीत्यर्थः केचित्तु चक्षुर्मात्रग्रा ह्योगुणोरूपं संयोग एकत्वादौ चातिव्याप्तिवारणाय मात्रेति रूपत्वेऽतिव्याप्तिवारणाय गुणस्योपादानं नच प्रभाभित्तिसंयो गे ऽतिव्याप्तिरितिवाच्यं गुणपदस्य विशेषगुणपरत्वात् न च मात्रपदव्यर्थत्त्वप्रसङ्गइतिवाच्यं सांसिद्धिकद्रवत्वे ऽतिव्याप्ते र्न च मनसोज्ञानसामान्यंप्रति करणत्वादसम्भव इति वाच्यम् मनोभिन्नचक्षुर्भिन्नेन्द्रियाग्राह्यत्वे सतिचक्षुर्ग्राह्योगुणोरूपामित्यस्य विवक्षितत्वात् इत्याहुस्तन्नअन्योन्याश्रयप्रसङ्गात् आचार्यप्रथम लक्षणस्य चादोषादितिआचार्यप्रथमलक्षणापेक्षयागौरवप्रसङ्गाच्च वादिविनोदे शङ्करमिश्रास्तु रसवद्वृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षा द्व्याप्यजात्यधिकरणमात्रवहिरिन्द्रियजन्य निर्विकल्पकविषयगु णत्वव्याप्यजातिमत्वंरूपत्वम् स्पर्शवृत्तितेजस्त्वसमानाधिकरणवि शेषगुणवृत्तिजातिमत्वं वातेजोवृत्तिवृत्तिवायुवृत्त्यवृत्तिविशेषगुण वृत्तिजातिमत्वंवेतिप्राहुः ननु रूपत्वजातौमानाभावा दित्यत आह शुक्लेति ॥

मू० । शुक्लःरसासमवेतनीलसमवे तवान् नीलत्वरहितशुक्लान्यत्वराहितत्वा त् नीलवदितिनीलरूपत्वसिद्धिः नीलंस्व

मात्रसमवेतवत् स्वमात्रसमवेतरहित नीलान्यत्वरहितत्वात् घटवत् इति नीलत्वजातिसिद्धिः नीलत्वरहितघटत्वात्यन्ताभाववत्वरहितः स्वपदार्थः ।

गुणत्वमादायार्थान्तरवारणाय रसासमवेतेतिरूपं षड्विधंशुक्लनीलपीतरक्तहरितकपिशभेदात् कश्चित्तु चित्रभेदेन सप्तविधंरूपंभवतीतिवदति ननु नीलत्वजातौमानाभावादित्यतआह नीलमितिनीलमात्रसमवेतं नीलत्वमेवेतिनीलत्वसिद्धिः नीलमात्रसमवेतत्वश्च नीलेतरासमवेतत्वेसति नीलसमवेतत्वम्बोध्यम् स्वपदस्यनीलपरत्वेदृष्टान्तासिद्धिर्घटपरत्वेबाधप्रसङ्गः स्वपदार्थं व्याचष्टे नीलत्वरहितेति तथाच स्वपदेननीलस्य घटस्यचधारणसम्भवान्नोक्तदोषयोरवकाशः स्वमात्रसमवेतत्वंच नीलाभिन्नघटभिन्नासमवेतत्वमेवं पीतत्वादिकमप्यूहनीयम् ।

मू० । गुणत्वेसतिरसनग्राह्योरसः सषोढा माधुर्यादिभेदेन क्षीरेक्षुगुडतैलेषु माधुर्यस्य साम्येपि आवान्तरजातिभेदस्य विद्यमानत्वात् विशेषगुणत्वसिद्धिः गुणत्वेसतिघ्राणग्राह्योगन्धः ॥

रसंनिरूपयतिगुणत्वेसतीति रसत्वेमधुरत्वादौ चातिव्याप्तिवारणाय गुणत्वेसतीति नच रसग्राहकंरसनं रसनग्राह्योरसः

( ७२ ) ( पृ॰ टि॰ ) रूपप्रथमलक्षणेपृथिवीत्वमादाय ग न्धेऽतिप्रसङ्गवारणाय रसवद्वृत्तीति, जातिविशेषणम्, वायुत्व मादायस्पर्शेऽति व्याप्तिवारणाय रूपवद्वृत्तीति, शुक्लवद्वृत्तीतित दर्थं, स्तेननात्माश्रयः, पाषाणादौव्यभिचारेण रसपृथिवीत्वयो र्व्याप्यव्यापकभावाभावात् भस्मनिचपाकजसरस्यैवस्वीकारात् घ्राणेरसानङ्गीकारइतिमते घ्राणत्वमादायगन्धे ऽतिव्याप्तिवार णाय द्रव्य त्वसाक्षाद्व्याप्येति, । परेतु यादृशरसनत्वव्याप्यवै जात्यावच्छिन्ने रसेनोत्पन्नस्ताद्दशजातिमादाय रसविशेषेऽति व्याप्तिरतस्तद्विशेषणमितिवदन्ति ॥ अपरेतुचक्षुरिन्द्रियेतेज स्त्वप्रदर्श नार्थंतदुपादानंनतुलक्षणेतस्यप्रवेशो, [व्यावर्त्याभावा दित्याहु :॥ केचित्तु तेजस्त्वलक्षणप्रदर्शनार्थमेवतत्, तत्रतदनु पादानेदीप त्वादावतिव्याप्तिरितिप्राहुः ॥

संयोगत्वमादायातिव्याप्तिवारणायमात्रेति, जन्यान्तस्यता दृशजातिमदिन्द्रिय जन्यत्वेसतिमनोभिन्न तादृशजात्यनधिक रणेन्द्रियाजन्यत्वमर्थं स्तेननासम्भवः । द्वित्वेऽतिव्याप्तिवार णाय निर्विकल्पकपदम्, प्रभात्वमादायातिव्याप्तिवारणाय गु णत्वव्याप्येति, गुणवृत्तित्वनिवेंशेतद्वारणेपि रूपत्वलक्षणेनील त्वादिवारणाय साक्षाद्व्याप्यार्थकव्याप्यपदोपादानस्या वश्यक त्वादित्यभिप्रायः, द्वितीयलक्षणेसत्तामादाय रसादावतिव्याप्ति वारणायस्पर्शावृत्तीति, स्पर्शत्वमादायातिव्याप्तिवारणाय रसा वृत्तित्वंविहायतदनुधावनम्, रसादिवारणाय समानाधिकर णान्तम्, गुणविशेषणम्, संयोगादिवारणायविशेषेति, समवा यसम्बन्धावच्छिन्नवृत्तितालाभायजातिपदम्, तेनरूपरसान्यत रत्वव्युदासः, तृतीयलक्षणेरसादिवारणायाद्यवृत्त्यन्तम्, संयो

इत्यन्योन्याश्रयइतिवाच्यं जिव्हाग्राधिष्ठानत्वेन रसनायानिरू पणात्, गन्धासमवेतमधुराम्लसमवेत जातिमान् वारसइत्यस्य लक्षणत्वादितिनान्योन्याश्रयावकासइतिसारम् ॥ वादिविनोदेश ङ्करमिश्रास्तु स्नेहवन्मात्र*वृत्तिजात्यधिकरणेन्द्रियजन्य निर्विक ल्पकविषयगुणत्व व्याप्यजात्यधिकरणगुणत्वं रसत्वम्, गन्धस्नेहो भय समानाधिकरणद्रव्यत्व साक्षाद्व्याप्यजात्यन्यतर व्याप्यताव च्छेदकजाति मद्विशेषगुणत्ववेतिमाहुः ॥ रसंविभजते सषोढामा धुर्यादिभेदेनेति, स,रसः, षोढा, षट्प्रकारकइत्यर्थः आदिपदेना म्ललवणकटुकषायतिक्तानांपरिग्रहः,ननुमाधुर्यरसस्य,क्षीरेक्षुरसे अर्थात् जले,गुडे,अर्थात् पृथिव्यांच, सत्वेन कथंतस्यविशेषगुणत्व मिति क्षिरेइत्यादिनाशंक्यावान्तरजाति विशेषमादाय लक्षणसम न्वय इत्यभिप्रायेणसमाधत्ते अवान्तरेति, तथाचमधुरत्वव्याप्य

---

गादिवारणायावृत्त्यन्तम्, उष्णत्वद्रवत्वत्वमादायातिप्रसङ्गवा रणायविशेषेति, जातिविशेषणम्, विशेषस्यस्पर्शद्रवत्वावृत्तित्व रूपवृतिनकोपि दोषः ॥ सुवर्णत्ववारणाय गुणवृत्तीति, ॥

---

* टि० रसप्रथमलक्षणेद्रव्यत्वमादाय रूपादावतिव्याप्तिवारणा यमात्रपदम्, द्वित्वेऽतिव्याप्तिवारणाय निर्विकल्पकेति, ॥ द्विती यलक्षणस्य गन्धसमानाधिकरणद्रव्यत्व साक्षाद्व्याप्यजातिस्नेह समानाधिकरणद्रव्यत्व साक्षाद्व्याप्यजात्यन्यतराभाव सामा नाधिकरण्या नवच्छेदकजातिमद्विशेषगुणत्वमर्थः, नीलत्वा दिवारणायनातो गुणत्वसाक्षाद्व्याप्यत्वनिवेशः, गन्धत्वस्नेह त्ववारणाय गन्धस्नेहावृत्तित्वनिवेशः, गुरुत्ववारणायविशेषे ति, । जलावनिविशेषगुणवृत्ति तेजोवृत्त्यवृत्तिगुणत्वसाक्षाद्व्या प्यजातीरसत्व मित्यपिद्रष्टव्यमितिनवगाः ॥

जातेर्भिन्नत्वात् गुडमाधुर्यगतजातौ जलमाधुर्यगतत्वाभावेन लक्ष णसमन्वयइतिभावः, गन्धन्निरूपयति गुणत्वेसतीति, गन्धत्वे सुर भित्वादौचातिव्याप्तिवारणायसत्यन्तम्, ननुगन्धग्राहकंघ्राणं घ्रा णग्राह्योगन्धइत्यन्योन्याश्रयइतिचेन्न नासाग्राधिष्ठानत्वेन घ्राण स्यनिरूपणात्, अथवारूपासमवेतसुरभ्यसुरभिसमवेतत्वान् ग न्धइत्यस्योक्त्वा न्नान्योन्याश्रयावकासइति, ननुजलादावपि गन्धोपलम्भात् कथंगन्धस्य विशेषगुणत्वमित्यतआह जलादा त्मविति, आदिपदेनवायोर्ग्रहणं, अयंभावः उपाधिशून्यजलेगन्ध ननुभवात् जलस्यगन्धोनभाविकोगुणः यदिजलस्यगन्धः स्वाभा विकोगुणः स्यात्तदा सर्वत्रजले उपलभ्येत् स्नेहवत् ।

मू० । जलादावौपाधिकीगन्ध प्र तीतिर्नस्वभावत इति विशेषगुणत्वासि द्धिः, जलंनगन्धाधिकरणमपाकजरूपाधि करणत्वात्तेजोवत्, वायोः पक्षतुल्यत्वा न्नव्यभिचारः ।

यतोनोपलभ्यते ऽतोनस्वभाविकइत्यवगम्यतइति, जलेगन्धाभावसाधका नुमानमप्याह जलमिति, ननुवायौगन्ध स्य सत्वेनपृथिवीत्वरहितवृत्तित्वस्यापिसत्त्वात् विशेषगुणत्वासि द्धिरतआह वायोरिति, पक्षतुल्यत्वान्नव्यभिचारः, नवाय्वन्तर्भा वेणव्यभिचारः, वाय्वन्तर्भावेण न तस्यविशेषणगुणत्वासिद्धिरि त्यर्थः, नहिपक्षेपक्षसमेवाव्यभिचारोदोषा धायकइतिसिद्धान्ता त्, तथा च वायौगन्धप्रतीतिरौपाधिकीनस्वत इतिभावः,

वायुर्नगन्धवान पाकजस्पर्शवत्वात्तेजो वदित्यन्वयिना यन्नैनंत न्नैवं रसालफलवदिति व्यतिरेकिणावायौगन्धाभावानुमानान्न तत्रगन्धइति, अथवाजलवायूनगन्धवन्ताचपाकजरूपस्पर्शान्यतर वत्वात् तेजोवदित्यनेनतत्र तत्रगन्धाभावः सिध्यतीतिभावः वा यौयदिगन्धःस्या त्तदाकुसुमकाननस्पर्शरहितेवायौ कथंनोपल भ्यते यतोनोपलभ्यते ऽतोगन्धस्तत्रनास्तीति गन्धोनवायोर्गुण इति, शङ्करमिश्रास्तु तिक्तसमानाधिकण * द्रव्यत्वसाक्षात् व्या प्यजातिमदिन्द्रिय जन्यनिर्विकल्पकविषय गुणव्याप्यजातिमत्वं गन्धत्वं, स्नेहासमानाधिकरणरस समानाधिकरणजातिनिरुपि तव्याप्यतावच्छेदकगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं, अनित्यमात्रवृ त्तिगुणत्वसाक्षात् व्याप्यजातिमन्मूर्तविशेषेगुणत्वंवेतिप्राहुः ।

---

* टि० प्रथमलक्षणेरूपादिवारणाय समानाधिकरणान्तम्, द्रव्यत्वमादायरूपादावति प्रसङ्गवारणायद्रव्यत्व साक्षाद्व्याप्ये ति, द्वित्वेऽतिप्रसङ्गवारणाय निर्विकल्पकपदम्, द्वितीयेस्नेहवा रणाया द्यसमानाधिकरणान्तम्, रूपवारणाय द्वितीयसमाना धिकरणान्तम्, तेजोपृथिव्यन्यतरत्वमादाय रूपेऽतिव्याप्तिवा रणायजातोति, व्याप्यतावच्छेदकत्वं तदभावसामानाधिकर ण्यानवच्छेदकत्वम्, नीलत्वादिवारणाय गुणत्वसाक्षाद्व्याप्ये ति, । तृतीयेरूपादिवारणायवृत्त्यन्तम्, नीलत्वादिवारणाय गुणत्वसाक्षाद्व्याप्येति, शब्दवारणायमूर्त्तेति, संयोगादिवारणा यविशेषेति, ॥

ध्वनिवृत्तिवृत्ति जलवृत्त्यवृत्तिगुणत्वसाक्षाद्व्याप्यजातिर्ग न्धत्व मित्यपिद्रष्टव्यमितिवनीनाः ॥

मू० । गुणत्वेसतित्वगिन्द्रियग्राह्यः स्पर्शः सत्रिविधः शितोष्णानुष्णाशीत भेदात्, नन्वनुष्णाशीतस्य न विशेषगुणत्वंतस्यपृथिवीवायुसाधारणत्वात्, पाकजापाकजाभ्या मवान्तरजातिभेदेन विशेषगुणत्वे नैमित्तिकद्रवत्वस्याप्यत्यन्ताग्निसंयोगे सत्युच्छेदानुच्छेदाभ्याम वान्तरजाति सद्भावेन विशेषगुणता स्यात् ततश्चनैमित्तिक द्रवत्वस्यसामान्यगुणपाठोनिरर्थकस्स्यात् सेयमुभयतः पाशारज्जुः, मैवमवान्तरजातिभेदस्येक्षुक्षीरमाधुर्यादिवदनुभवसिद्धत्वाद, न्यथामहान्धकारेस्पर्शोपलम्भमात्रेणवायुर्वातीति प्रत्ययोनस्यात् ।

स्पर्शं निरूपयति गुणत्वेसतीति, स्पर्शत्वेशीतस्पर्शत्वादौ चाति व्याप्तिवारणायसत्यन्तं, न च स्पर्शग्राहकंत्वक् त्वगिन्द्रियग्राह्यः स्पर्शइत्यन्योन्याश्रयइतिवाच्यं त्वगधिष्ठानत्वेनतन्निरूपणात्, रूपाद्यवृत्तिशीतोष्णवृत्ति मान्स्पर्श इत्यस्याभिधानाद्वादोषाभावात्, अनुष्णाशीतस्पर्शोविशषगुणत्वाभावमाशंकते न

ण्विति, समाधत्ते पाकजेति, तथाचपृथिव्यांपा कजस्पर्शोस्ति वा यौ चापाकजस्पर्शोस्तीत्यनुष्णाशीतस्पर्शत्वव्याप्यं पाकजानुष्णा शीतस्पर्शत्वमादाय पृथिवीस्पर्शे, अपाकजानुष्णाशीतस्पर्शत्वमा दाय च वायुस्पर्शे, विशेषगुणस्यलक्षणसमन्वयसंभवादितिभावः। उत्तरेभातिवन्दिमाहनैमित्तिकेति, तथाच ताद्दशोच्छिद्यमानद्रव त्वत्वस्यपृथिवीद्रवत्वे ताद्दशानुच्छिद्यमानद्रवत्व त्वस्यतैजसद्रवत्वे सत्वेनद्रवत्वत्वावान्तर ताद्दशजातिद्वयमादाय द्रवत्वेपिविशेषगुण तास्यादिति तत्रातिव्याप्तिरितिभावः, इष्टापत्तौवाधकमाहततश्चे ति, ननुविशेषगुणलक्षणे जातौ साक्षाद्गुणत्वव्याप्यत्वस्यनिवे शान्नैमित्तिकद्रवत्वे ऽतिव्याप्ति वारणंभवतीत्युक्तौ पाकजा नुष्णशीतस्पर्शत्वादिजातौ साक्षाद्गुणत्वव्याप्यत्वविरहेणस्पर्शे ऽव्याप्तिरिति साक्षान्निवेशानिवेशोभयपक्षे दोष, इत्याह सेयमुभ यतइति, परेतु ननु उच्छेदानुच्छेदाभ्या मवान्तरजातेर कल्पना न्नातिव्याप्तिरितियदिमन्यतं तदापाक जापाकजाभ्यांमावान्तर जातेः स्पर्शेप्यनुपगमात्पर्शेप्यव्याप्ति, स्तथाचावान्तर जात्यस्वी कारस्वीकारोभपपक्षेप्यप्रतीकार, इत्याह सेयमुभयतइत्याहुः, अन्येतु ननुनैमित्तिक द्रवत्वस्य सामान्यगुणत्वेन विशेषगुणलक्ष णस्यतत्रातिव्याप्तिः, विशेषगुणत्वस्वीकारान्नातिव्याप्तिरिति य द्युच्यते तदासामान्यगुणपाठस्य निरर्थकत्वप्रसंग,इति तस्य सा मान्यगुणत्वस्वीकारा स्वीकारोभयपक्षे दोष, इत्याह सेयमुभयत इत्याहुः, प्रतिबन्दिंखन्डयति मैवमिति, स्पर्शगतावान्तरजातिवि शेषस्येक्षुक्षीरादिगतरसवृत्ति जातिविशेषवदनुभवसिद्धत्वात्, अ त्रयुक्तिमाह अन्यथेति, अन्यथा, वायुस्पर्शादौ वैजात्यानभ्युपग मे, महान्धकारे, निविडान्धकारे,स्वशीरारस्या प्रत्यक्षदशायामित्य

र्थः, तथाचतदानींस्पर्शेन वायोरेव प्रत्ययोभवतिनेतरेषां सचस्प र्शोवायोरेवेत्य वश्यं वक्तव्यंभवतीति तादृशस्पर्शवैजात्यसिद्धि रितिभावः, ननुनैमिमित्तिकद्रवत्वेप्यानुभाविकी विलक्षणाजा तिर स्तीत्यत आह नचैवमिति, एवमनुष्णाशीतस्पर्शत्वव्याप्ययोः पाकजत्वा पाकजत्वयोर्जातिद्वयोर्भेदेन दाकजापाकजयोर्भेदानु भववत् नैमित्तिक द्रवत्वत्व व्याप्योच्छिद्यमानत्वानुच्छिद्यमानत्व योर्भेदेनभेदानुभवइत्यर्थः तथाचात्यन्तानलसंयोगेसत्युच्छिद्य मानद्रवत्वस्यपीतिमगुरुत्वाश्रये पार्थिवभागेतेजसिचसत्वेन त स्यपृथिवीवृत्तितया पृथिवीत्वरहिततेजोवृत्ति तयाचतद्वृत्तित्वर हितत्वस्यानुच्छिद्यमानत्वेविरहेणजलपृथिव्याश्चोच्छिद्यमान द्रव त्वस्य सत्वेनतद्वृत्तित्व रहितत्वस्योच्छिद्यमानत्वेविरहेणद्रवत्वत्वे चतस्यविरहेण तत्रतत्रातिव्याप्ति विरहादितिभावः वायुस्पर्शेवि शेषगुणत्वस्यानुमानमप्याहवायुस्पर्शइति,वायुस्पर्शेविशेषगुणत्वसि द्धिरितिशेषः तथाच द्रवत्वत्वव्याप्यंनैमित्तिक द्रवत्वत्वं सांसि द्धिक द्रवत्वत्वञ्च तत्र सांसिद्धिक द्रवत्वत्वे पृथिवीवृत्ति वृ त्तित्वस्याभावेन पृथिवीवृत्ति पृथिवीत्वरहितवृत्ति । वृत्तित्वस्या भावसत्वात् तमादायसांसिद्धिक द्रवत्वेलक्षणसमन्वयः, नैमित्ति कद्रवत्वत्वस्यावान्तरजातेरसत्वात्तस्यच पृथिवीवृत्तिपृथिवीत्वरहि त तेजोवृत्तिद्रवत्ववृत्तितया तादृशवृत्तित्वरहितत्वविरहेण ग्रह णासंभवात् तमादायनैमित्तिकद्रवत्वेऽतिव्याप्त्यसंभवादितिभा वः, अथद्रवत्वस्याश्रयभेदेनभिन्नतया पृथिव्यांयन्नैमित्तिकद्र वत्वं तन्नतेजसि, एवंतेजोवृत्तिद्रवत्वन्नपृथिव्यामितिद्रवत्वत्वंनै मित्तिकद्रवत्वत्वंच तादृशवृत्तित्वरहितत्वस्य गुणत्वव्याप्यत्वस्य सत्वेनतमादायनैमित्तिकद्रवत्वे ऽतिव्याप्तिरितिचेन्न पृथिवीवृत्ति

वृत्तित्व पृथिवीत्वरहितवृत्तिवृत्तित्वो भयाभावस्यतादृशरहिता न्तेन विवक्षितत्वात् पृथिवीवृत्तिनैमित्तिकद्रवत्ववृत्तित्वस्यपृथिवी त्वरहितते जोवृत्तिनैमित्तिकद्रवत्ववृत्तित्वस्यचो भयस्यैवद्रवत्व त्वेनैमित्तिकद्रवत्वत्वेच सत्वेनतयोर्ग्रहणासंभवात्, वस्तुतस्तुपी तिमगुरुत्वाश्रयेते जसिचैकस्यैव द्रवत्वस्यानुभवान्नातिव्याप्त्य वकाशइति प्रागेवोक्तत्वात्, नीलरूपस्यपृथिवीभिन्ने ऽभास्वरशुक्ल रूपस्य जलभिन्ने, भास्वरशुक्लरूपस्य तेजोभिन्ने, गन्धस्य पृथिवी भिन्नेवृत्तित्वविरहेण रसस्यवैजात्याश्रयतयास्पर्शस्या पितथा विधतया, ज्ञानादावात्मभिन्ने, शब्दस्या काशभिन्ने, सांसिद्धिकद्र वत्वभिस्यजलभिन्ने, ऽविद्यमानतयासर्वत्र लक्षणसमन्वयइति ॥ *

मू० । पृथक्त्वासमवेतसर्वान्योन्या ऽभावसमानाधिकरणैक द्रव्यसमवेतस मवेतवतीसंख्या, ।

---

* टि० भावनाभिन्नोयोजन्यैकत्व व्यापतावच्छेदकस्पर्शा वृत्तिधर्मसमवायो तदन्यत्वेसति गुरुत्वनैमित्तिद्रवत्वान्यगुण त्वं विशेषगुणत्वमितिकेचित्, संस्कारत्वमादाय भावनायाम व्याप्तिवारणाय भावनाभिन्नत्वविशेषणम्, रूपादावव्याप्तिवा रणाया वच्छेदकान्तं, धर्मविशेषणम्, सत्तामादायोक्तदोषवा रणाय स्पर्शावृत्तीति, स्पर्शत्वमादाय स्पर्शेऽव्याप्तिवारणाय रू पावृत्तित्वं विहायस्पर्शावृत्तित्वविशेषणम्, संयोगादिवारणाय सत्यन्तम्, गुरुत्वनैमित्तिकद्रवत्ववारणायान्यान्तम् जात्यादि वारणायगुणत्वेति, जन्यैकत्वव्यापकतावच्छेदकत्वस्थाने लाघ वाद्वायुवृत्तिवृत्तित्वस्यवानिवेश इति ॥

संख्यांनिरूपयति, पृथक्त्वासमवेतेति, सत्तागुणत्वमादा यातिव्याप्तिवारणाय पृथक्त्वासमवेतेति, एतच्च, चरमसमवेत विशेषणं, घटसमवेतरूपसमवेतरूपत्वमादायाति व्याप्तिवारणाय सर्वान्योन्याभावसमानाधिकरणस्योपादानं, तस्यचद्रव्यसमवेते ऽन्वयः तथाच घटीयरूपेघटान्योन्याभाव समानाधिकरणत्वविर हेण सर्वान्योन्याभावसमानाधिकरणसमवेत मध्येरूपादीनांग्रह णासंभवान्नातिव्याप्तिरितिभावः ननुकपालद्वयसमवेतघटस्यसर्वा न्योन्याभावसमानाधिकरण तयातत्समवेत घटत्वमादायघटेऽति व्याप्तिरित्यतआह एकद्रव्येति, एकद्रव्यपदमन्त्यावयविपरं(१)त थाचान्त्यावयविघटादिसमवेतत्वस्य घटेबाधान्नातिव्याप्तिरिति, ननुद्वित्वबहुत्वादौसत्तावच्छेदसामानाधिकरण्यस्य द्रव्यभेदसामा नाधिकरण्यस्यविरहेणसर्वान्योन्याभावसामानाधिकरण्यविरहात् सर्वान्योन्याभावसमानाधिकरणै कद्रव्यसमवेताप्रसिद्ध्याऽसंभव इतिचेन्नवस्तुत्वव्यापकत्वस्य सर्वान्योन्याभावसमानाधिकरण पदा र्थत्वात् व्यापकताचस्वसमानाधिकरणभेद प्रतियोगित्वसंबन्धेन ग्राह्या, स्वतादात्म्य स्वसमानाधिकरणभेद प्रतियोगिवृत्तित्वो भयसंबन्धेनवस्तुविशिष्टत्वस्यवातदर्थत्वात्, भेदश्चप्रतियोग्यवृत्ति ग्राह्यः तेनोभयभेदमादय तद्घटीयरूपादौ सर्वान्योन्याभावसमा नाधिकरणत्वस्य सत्वेपिनातिव्याप्त्यवकाशः उभयभेदस्यकेव लान्वयित्वेन प्रतियोगिवृत्तित्वात् नचप्रतियोगित्वस्यकेवलान्व यित्वात् प्रतियोग्यवृत्तिभेदाप्रसिद्ध्याऽसंभव इति वाच्यं स्वप्र तियोग्यवृत्तित्वस्य विवक्षितत्वात् नचस्वत्वस्याननुगतत्वात्, अ नुगतत्वपक्षेचाव्यावर्तकत्वादितिवाच्यं स्वस्वप्रतियोगिवृत्तयो

---

(१) (टि॰) अवयवभिन्नार्थकमितिभावः ।

येयेभेदास्तत्तद्भेद कूटवत्वस्याविवक्षितत्वात्, अथासर्वज्ञस्य तादृश विवक्षायाः कर्तुमशक्यत्वादितिचेन्न स्वनिरूपकत्वस्वाश्रयावृत्ति त्वोभयसम्बन्धेन प्रतियोगितावदन्यत्वस्य भेदविशेषणत्वात्, अथ वासर्वान्योन्या भावसामानाधिकरण्यं, उभयावृत्तिधर्म्मावच्छि न्नप्रतियोगिताकभेदत्व व्यापकत्वं,व्यापकताचसामानाधिकरण्य संबन्धेनेतिदिक् (२) । अथसर्वान्योन्याभावसमानाधिकरणे मे पद्द्रयसंयोगविभागसमवेत संयोगविभागत्वमादायसंयोगविभा गचातिव्याप्तिरितिचेन्न द्रव्यसमवेतसंयोगविभागभिन्नत्वस्य, द्वितीयसमवेतवा संयोगत्वविभागत्वभिन्नत्वस्यनिवेशादतिव्याप्ति वारणसंभवात्, (३) वस्तुतस्तुरूपासमवेतैकत्वद्वित्वसमवेतवतीसं ख्येति, एकत्वंरूपावृत्तिद्वित्ववृत्तिजातिमदेकत्वद्वित्वव्यतिरेकित्व रहितत्वात् द्वित्ववदिति संख्यात्वसिद्धिः, एकत्वद्वित्वादिपरार्ध भेदेनानेकविधासंख्यातत्रनित्यगतमेकत्वं नित्यमनित्यगतंचैकत्व मनित्यं द्वित्वादिकंतुसर्वमनित्यमेवेतिबोध्यम् ॥

मू० । आदाविन्द्रियसन्निकर्षघट नादेकत्व सामान्यधीरेकत्व द्वयगोचराम तिरतोद्वित्वंततोजायते, द्वित्वत्वप्रमिति स्ततोपि परतोद्वित्वप्रमानन्तरं द्वेद्रव्ये

---

(२) (टि॰) नव्यास्तुवस्तुविशिष्टत्वन्तत् वैशिष्ट्यञ्चस्ववृ- त्तित्वस्वभिन्नवृत्तित्वोभयसम्बन्धेनेतिवदन्ति ॥

(३) (टि॰) नव्यास्तुपृथक्त्वाद्यसमवेतेतिमूलपाठः तत्रा- दिपदेनसंयोगविभागयोः परिग्रह इतिनदोष इत्याहुः ।

इतिधीरियंनिगदिनाद्वित्वोदयप्रकृया ॥
संख्यासमवेतत्व रहितसंख्यासमवायि
समवेत समवेतवत्परिमाणम् ॥

ननुद्वित्वादयः कथमुत्पद्यन्तेकथम्वानश्यन्तीत्यतआहआ दाविति, आदौ, प्रथमतः, विषयेंद्रियसन्निकर्षोभवति, तदनन्तर मयमेकोऽयमेकइत्याकारकैकत्व द्वयविषयकज्ञानं,ततोद्वित्वोत्पत्तिः तदनन्तरं द्वित्वत्वप्रमितिः, द्वित्व द्वित्वत्वविषयक निर्विकल्पक ज्ञानं, ततोद्वित्वत्वविशिष्टप्रत्यक्षं ततोद्वेद्रव्यइति धीरुत्पद्यते, इति, द्वित्वोदये,द्वित्वोत्पत्तौ,प्रक्रिया,रातिः,एकत्वद्वयविषयकज्ञानना शानन्तरं द्वित्वस्यनाशः, एवंत्रित्वादीनामपिबोध्यम्, एकत्वद्वयवि षयकंयज्ज्ञानंतदेवापेक्षाबुद्धिशब्देनोच्यते, साचबुद्धिस्त्रिक्षणस्था यिनी चतुर्थक्षणस्थायिनीवाबोध्या, द्वित्वप्रत्यक्षानुरोधादितिसं क्षेपः (१) ॥ परिमाणंनिरूपयतिसंख्येति, सत्तागुणत्वमादायाति व्याप्तिवारणायरहितान्तं, चरमसमवेतविशेषणं, ननुसंयोगावि भागत्वस्यापि तादृशतयातद्वत्वस्यसंयोगविभागसत्वेना तिव्याप्ति रितिचेन्न द्वितीयसमवेते संयोगत्वविभागत्वयोर्भेदस्याविवक्षितत्वा त्, प्रथमसमवेतेवा वस्तुविशिष्टान्यत्वस्य विवक्षितत्वाद्वैशिष्ट्यञ्च स्वसमवेतत्वस्वभिन्नसमवेतत्वोभयसम्बंधेन स्वपदंवस्तुपरं, संयो

---

(१) (टि॰) अस्यायम्भावः अपेक्षाबुद्धेर्द्विक्षणमात्रावस्था यित्वे निर्विकल्पककालेतस्यानाशेन तदनन्तरंद्वित्वस्य नाशा त्प्रत्यक्षानुपपत्तिः, लौकिकप्रत्यक्षं प्रतिकार्य्यसहभावे नैवविषयस्य हेतुत्वादिति ।

गविभागयोर्वस्तु द्वयवृत्तित्वात् तयोर्ग्रहणासंभवात् नचतथापिसं ख्यासमवायिघटसमवेत रूपादिसमवेत रूपत्वादिकमादाय रूपा दावतिव्याप्तिरितिवाच्यं संख्यासमवायियद्यत् प्रत्येकंतत्समवेत समवेतत्वस्य संख्यासमवायित्वव्यापकत्व पर्यवसितस्यलक्षणघटक त्वात्, यद्वासंख्यासमवेतत्वरहितत्वेसति संख्याव्यापकोयस्तद्व त्वं समुदितलक्षणार्थः व्यापकताचवस्तु द्विशिष्टान्यस्याश्रयवत्ता सम्बंधेन, वस्तुवैशिष्ट्यश्च पूर्वोक्तोभयसम्बंधेन. प्रथमंव्या प्यतास्वरूपसम्बंधेन, द्वितीयेव्याप्यताचसमवायसम्बंधेनग्राह्या, तथाचरूपादीनां गगनादावसत्वेन संयोगविभागयोश्चवस्तुद्वयस मवेतत्वेन रूपत्वसंयोगत्वविभागत्वादीनां तथाविधव्यापकत्वावि रहाद्रू त्वादीनांग्रहणासंभवान्नोक्तातिव्याप्तिरितिभावः ॥

मू० । शब्दासमवायि समवेतत्व रहितहित सर्वान्योन्याभावसमानाधिक रणसमवेत परिमाणासमवायिसमवेत त्वरहिताधिकरणं पृथक्त्वम् ।

पृथक्त्वंनिरूपयति शब्देति, तथाच शब्दासमवायिसम वेतत्वाभाववत्वेसति, सर्वान्योन्याभावसमानाधिकरण निरूपि तसमवायसम्बन्धा वच्छिन्नवृत्तितावत्वेसति, परिमाणासमवायि समवेतत्वाऽभावविशिष्टोय, स्तदधिकरणम् पृथक्त्वमितिसमुदित लक्षणार्थः, पृथक्त्वंलक्ष्यमन्यल्लक्षणम्, संयोगत्वमादायातिव्या प्तिवारणाय प्रथमसत्यन्तम्, तथाच शब्दासमवायीयः संयोग (१)

(१) (टि० ) मृदङ्गाकाशसंयोगः ॥

स्तत्समवेत त्वस्यैवसंयोगत्वेसत्वेन तस्यग्रहणासंभवान्नातिव्याप्तिरिति, रूपत्वरसत्वगन्धत्व सुखत्वदुःखत्वादीनां तथाविधतया तेषामधिकरणेरूपरसादावति व्याप्तिवारणायद्वितीयसत्यन्तम्, तथाचरूपादौस्वाश्रय, प्रतियोगिकान्योन्याभावसामानाधिकरण्यविरहेण सर्वान्योन्याभावसामानाधिकरण्यविरहाद्रूपत्वादौ सर्वान्योन्याभावसमानाधिकरणसमवेतत्वस्य विरहेणतेषांगृहणासंभवान्नातिव्याप्तिरितिभावः, संख्यात्वद्वित्वत्वत्रित्वत्वमादायातिव्याप्तिवारणाय तृतीयविशिष्टान्तम्, तथाचद्व्यणुकपरिमाणासमवायिकारणं परमाणुगतद्वित्व त्रसरेणुपरिमाणासमवायिकारणं (१) त्रित्वंतत्समवेतत्वस्य द्वित्वत्वेत्रित्वत्वेसंख्यात्वे सत्वेन परिमाणासमवायि समवेतत्वाभाव विरहाचेषांलक्षणाघटकत्वान्नातिव्याप्तिरिति, पृथक्त्वत्वस्यतथाविधतया तद्वत्वस्यपृथक्त्वेसत्वेनलक्षणसमन्वयसंभवात्, केचित्तुअस्मादयंपृथगितिव्यवहारासाधारणकारणगुणः पृथक्त्वमित्याहुः ॥

**मू०। विभागासमवेतेतराभावाविरोधिसमवेत प्रध्वंसप्रतियोगित्वानाधिकरण समवेतत्वानधिकरणगुणत्वव्याप्यजात्यधिकरणं संयोगः, ॥**

संयोगंनिरूपयति विभागेति, विभागासमवेतत्वेसति, इतराभावाविरोधि समवेतत्वेसति, प्रध्वंसप्रतियोगित्वानधिकरणसमवेतत्वानधिकरणत्वेसति गुणत्वव्याप्यायाजाति, स्तदधि

(१) (टि०) द्व्यणुकत्रित्वं।

करणंसंयोगइत्यर्थः, विभागत्वजातिमादायातिव्याप्तिवारणाय प्रथमसत्यन्तम्, जातिविशेषणम्, ननुगन्धत्वसुखत्वादिजातेर्विभागासमवेततया प्रध्वंसप्रतियोगित्वानधिकरण नित्यासमवेततया लक्षणघटकत्वात् तदाश्रयत्वस्यगन्धसुखादौसत्वेन तत्रतत्राति व्याप्तिरित्यतआह इतरेति, इतरत्वञ्चात्राविरोध्यपेक्षया, तथा चस्वेतराभावविरोधिभिन्नं यत्स्वंतत्समवेतत्वेसतीत्यर्थः विरोधित्वञ्चात्रैकदेशावृत्तित्वं, एवञ्चगंधे स्वेतरप्रतियोगिकस्याधिकरणवृत्तितद्व्यक्तित्वा भावस्यैवविरोधित्वस्यसत्वेन तादृश विरोधिभिन्नत्वस्या सत्वान्नातिव्याप्तिरिति नचेतरपदमनर्थकमितिवाच्यम भावस्यकेवलान्वयितयातद्विरोधिनोऽप्रसिद्धेः कथञ्चित्प्रसिद्धत्वे(१)गन्धादावतिव्याप्तेस्तादवस्थ्यात् गन्धादावभावसामानाधिकरण्यसत्वेन विरोधित्वस्यासत्वात् नचाभावपदमनर्थकमितिवाच्यं संयोगस्यापि गुणकर्मत्वादिविरोधितया ऽसंभवापत्तेः, अथस्वाभावविरोधिभिन्नत्वमेव लाघवान्निवेश्य तामितिवाच्यं द्रव्येसंयोगसामान्याभावेमानाभावात् प्राचीनमतेसंयोगेसंयोगाभावविरोधित्वस्य सत्वेनासंभवतादवस्थ्यात्, गन्धादा (२) वतिव्याप्तिश्चस्यात्, अथतथापिसंयोगेस्वेतरसत्ताद्रव्यत्वयोरभावविरोधित्वस्य सत्वेनासंभवतादवस्थ्यमेवेति चेन्न इतरेद्रव्यत्वव्याप्यत्वस्यविवक्षितत्वात्। वस्तुतस्तुइतरपदंसामान्यधर्मेतरधर्म्म पर, मर्थादुभयावृत्तिधर्मपरं, तथाचोभयावृत्तिधर्माभावविरोधिभिन्न समवेतत्वस्यपर्यवसितार्थतया (३) द्रव्यत्व

---

(१) टि॰गगनस्यावृत्तित्वात्तत्रैवविरोधित्वं सुघटमितिभावः॥

(२) टि॰ गन्धस्याव्याप्यवृत्तित्वादितिभावः॥

(३) (टि॰) उभयावृत्तिधर्म्मविशिष्टान्यसमवेतत्वं फलितार्थः वैशिष्टयञ्च स्वाभावविरोधित्व सम्बन्धेनेति॥

सत्तादावुभयावृत्तित्वस्यासत्वेन द्रव्यत्वसत्तयोरितरपदेनग्रहणा संभवात्, घटनिष्ठतद्व्यक्तित्वादेरेवतथाविधतया तदभाववतिप रे घटपटद्वयसंयोगस्यसत्वेन, एतत्कपालत्वाभाववति तत्कपा लेकपालद्वयसंयोगस्य, एतन्मेषत्वाभाववति मेषान्तरेमेषद्वयसं योगस्य, सत्वेनोभयावृत्तिधर्माभावविरोधिभिन्न तयातत्समवेत त्वस्यसंयोगत्वेसत्वेन तमादायलक्षणसमन्वय इतिभावः, ननु इतराभावाविरोधि द्वित्वबहुत्वादिसमवेतस्य संख्यात्वस्यगुणत्व व्याप्यतयालक्षण घटकत्वात्तमादायसंख्यामतिव्याप्तिरित्यतआ हप्रध्वंसेति, तथाचनध्वंसप्रतियोगित्वा नधिकरणनित्यगतैकत्व समवेतत्वस्य संख्यात्वेसत्वेन तादृशसमवेतत्वानधिकरणत्वस्या सत्वात्तस्यलक्षणाघटकत्वान्नातिव्याप्तिरिति, नचद्वित्वत्वबहुत्व त्वादिजाते स्तथाविधतयाद्वित्वबहुत्वादावति व्याप्तिरितिवाच्यं गुणत्वसाक्षाद्व्याप्यत्वस्यविवक्षितत्वात् द्वित्वत्वादीनां साक्षाद्गुण त्वव्याप्यत्वविरहादतिव्याप्त्यभावात्, ननुविभुद्वयसंयोग स्वी कारपक्षेतस्यनित्यतया प्रध्वंसप्रतियोगित्वानधिकरण विभुद्वयसं योगसमवेतत्वानधिकरणत्वस्य संयोगत्वे विरहेणासंभवप्रसंगा दित्यतोलक्षणान्तरमाह

मू० । विभागासमवेतसर्वान्योन्या भावसमानाधिकरण समवेत शब्दास मवायिसमवेतवान् वासंयोगः ॥

विभागेति, सत्तागुणत्वमादायातिव्याप्तिवारणाय वि भागासमवेतेति, ननुद्वितीयशब्दंप्रतिप्रथमशब्दस्या समवायित

याशब्दत्वस्य लक्षणघटकत्वात्तमादायशब्देति व्याप्तिरित्यत आहसर्व्वेति, तथाचशब्देआकाशान्योन्याभाव सामानाधिकरण्यविरहेण सर्व्वान्योन्याभावसामानाधिकरण्यस्यासत्वेन शब्दत्वस्यलक्षणाघटकत्वान्नातिव्याप्तिरिति, (१) ननुद्वित्वत्वादेरपिलक्षणघटकतयातमादाय द्वित्वादावतिव्याप्तिरित्यत आह शब्दासमवायीति, तथाचद्वित्वादौ शब्दासमवायित्वविरहेण शब्दासमवायिसमवेतत्वस्य द्वित्वत्वादौविरहान्नातिव्याप्तिरितिभावः, विभागंनिरूपयतिसंयोगेति,

मू०। संयोगासमवेतसर्वान्योन्याभाव समानाधिकरणसमवेत शब्दासमवायिसमवेतवान् विभागः, विशेषणतयापरप्रत्ययनिमित्तंपरत्वं, विशेषणतया ऽपरप्रत्ययनिमित्तमपरत्वम्॥

सत्तागुणत्वमादायातिव्याप्तिवारणाय संयोगासमवेतेति, शब्दत्वमादायातिव्याप्तिवारणायसर्व्वेति, द्वित्वत्वादिकमादायातिव्याप्तिनिराशाय शब्दासमवायीति, तथाचसंयोगनिरूपितसमवाय सम्बन्धावच्छिन्नवृत्तित्वा भाववत्वेसति, सर्व्वान्योन्याभावसमानाधिकरणनिरूपितसमवाय सम्बन्धावच्छिन्न

(१) (टि०) तत्वञ्चोभयावृत्तिधर्म्मावच्छिन्नप्रतियोगिताकभेदवृत्तिभेदप्रतियोगिता नवच्छेदकसमवेतत्व, मवच्छेदकताच सामानाधिकरण्य सम्बन्धावच्छिन्नाज्ञ येति॥

वृत्तितावत्वेसति, :शब्दासमवायिनिरूपितसमवाय सम्बन्धाव च्छिन्नवृत्तिताश्रय, वान् विभागइति पर्यवसितोर्थइति, ननुसंयो गलक्षणेविभागस्य विभागलक्षणेसंयोगस्य प्रवेशादन्योन्याश्रय इतिचेन्न अत्रसंयोगपदस्याभिघातपरतया संयोगासमवेतत्वस्या भिघातासमवेतार्थकत्वा दन्योन्याश्रयस्यानवकाशादितिध्येय म् ॥ परत्वंनिरूपयतिविशेषणतयेति, विशेषणता, प्रकारता, अवच्छिन्नत्वंतृतीयार्थः, निमित्तत्वं, निमित्तकारणत्वं, तथाच परप्रत्ययनिष्ठप्रकारत्व सम्बन्धावच्छिन्नजन्यतानिरूपित तादा त्म्यसम्बन्धावच्छिन्न कारणताश्रयः परत्वमित्यर्थः, अथवावैशि ष्ट्यंतृतीयार्थः वैशिष्ट्यंचनिरूपकत्वरूपं, तथाचतादात्म्यसम्ब न्धावच्छिन्नपरप्रत्ययनिष्ठजन्यता निरूपितप्रकारतानिरूपकत्वस म्बन्धावच्छिन्नजनकताश्रयःपरत्वमित्यर्थः विशेष्येऽतिव्याप्तिवा रणाय विशेषणतयेत्युक्तम्, ॥ अयमस्मात्परइत्याकारकप्रत्यया साधारणकारणगुणः परत्वमित्यन्ये, ॥ परत्वंद्विविधं नियता नियतभेदात्,नियतंकालकृतंज्येष्ठे.अनियतंचदेशकृतंचैत्रमैत्रादौ, दैशिककालिकभेदात्द्विविधंतत्, अपरत्वंनिरूपयति विशेषणत येति, अत्रापिपूर्ववत्सर्वम्, अपरत्वंद्विविधं नियतानियतभेदा त्, नियतंकनिष्ठेकालकृत, मनियतंचदेशकृतं चैत्रमैत्रादौ, बोध्य मिति, बुद्धिंनिरूपयति अर्थेति,

मू० । अर्थप्रकाशोबुद्धिः, यस्मि न्सत्यनुरागस्तत्सुखम्, यस्मिन्सतिद्वेष स्तद्दुःखम्, प्रार्थनेच्छा, ज्वलनात्मको

द्वेषः, उत्साहः प्रयत्नः, आद्यपतनास मवायिकारणंगुरुत्वम्, आद्यस्यन्दनास मवायिकारणंद्रवत्वम्, पृथिवीवृत्तिवृत्ति त्वरहितात्मगुणावृत्ति शब्दावृत्तिगुणत्व साक्षाद्व्याप्यजातिमान्स्नेहः ॥

अर्थस्य, घटादेः, प्रकाशो, ऽवभासो, येनस, बुद्धिः, ज्ञान, मिति, तथाचयस्मिन्सतिघटोभाति घटोज्ञायतेघटमहंजा नामीत्याद्यनुभवः तत्बुद्धिरिति ॥ सर्वव्यवहारासाधारणका रणं बुद्धिरित्यन्ये, बुद्धिमग्रेप्रपञ्चयिष्यामः (१) सुखंनिरूपयति यस्मिन्सतीति, सतिसप्तम्याः प्रयोज्यत्वमर्थः राहूपरागेस्नायादि तिस्मृतेः, यत्प्रयोज्योऽनुरागस्तत्सुखं, अनुरागप्रयोजकंसुखमि तियावत् ॥ अनुकूलवेदनीयं सुखमित्यन्ये (२) दुःखंनिरूपय तियस्मिन्सतीति, प्रयोज्यत्वंसप्तम्यर्थः, यत्प्रयोज्योद्वेषस्तदुःखं,

---

(१) (टि० ) घटचक्षुस्संयोग जन्यवृत्तिगुणत्वसाक्षाद्व्या प्यजातिर्ज्ञानत्वमितिनवीनाः ॥

(२) (टि० ) सुखत्वंदुःखत्वञ्चप्रत्यक्षसिद्धोजातिविशेषः, विवाहविशेष्यक मदिष्टसाधमत्वप्रकारक ज्ञानजन्यवृत्तिप्रवृत्त्य वृत्तिजातिमत्वमिच्छात्वम्, विषभक्षणविशेष्यकानिष्टसाधनत्व प्रकारकज्ञानजन्यवृत्तिनिवृत्त्यवृत्तिजातिद्वेषत्वम्, भोजनविशे ष्यककृतिसाध्यत्व प्रकारकेच्छाजन्यवृत्तिगुणत्वसाक्षाद्व्याप्यजा तिः प्रयत्नत्वम्,

द्वेषप्रयोजकंदुःखमितियावत्, प्रतिकूलवेदनीयं दुःखमित्यन्ये, इच्छांनिरूपयति प्रार्थनेति, द्वेषंनिरूपयति ज्वलनेति, गुरुत्वंनिरूपयति आद्येति, क्रियायामतिव्याप्तिवारणायाद्येति (१) द्रवत्वंनिरूपयतिआद्येति, अत्रापिक्रियायामतिव्याप्तिवारणायाद्येति, (२) स्नेहंनिरूपयति पृथिवीति, रूपत्व रसत्वगन्धत्वस्पर्शत्व परत्वापरत्वत्व गुरुत्वद्रवत्वत्वादिकमादायातिव्याप्तिवारणायरहितान्तम्, जातिविशेषणं, ज्ञानत्वादिकमादायातिव्याप्तिवारणायात्मगुणावृत्तीति, जातिविशेषणम्, शब्दत्वमादायातिव्याप्तिवारणाय शब्दावृत्तीति, शुक्लत्वव्याप्याभास्वरत्वादिजातिमादाय भास्वरा दावतिव्याप्तिवारणाय साक्षादित्यस्योपादानं (३) ननुस्नेहेमानाभावात्, चूर्णादिपिण्डीभावस्य जलेनैव निर्वाहइतिचेन्नसांसिद्धिकद्रवत्वं वसुधावृत्तिद्रवत्वरहितगुणत्वव्याप्यजाति मन्मधुराभास्वरशुक्लरूपस्पर्शभिन्नजलवृत्तिगुणभेदवत्, वसुधाजलव्यतिरेकित्वरहितवृत्तित्वात् गंधवदिति तत्सिद्धिसंभवात्, यद्वाजलंतेजोवृत्तित्वरहितरसावृत्ति गुणत्वसाक्षात् व्याप्यजातिमद्विशेषगुणवत्, गुरुत्वात् पृथीवीवादित्य

---

(१) (टि०) पृथिवीतेजो वृत्तिवृत्तिवायुवृत्त्यवृत्तिरूपावृत्ति गुणत्वसाक्षाद्व्याप्यजातिमत्वं द्रवत्वत्वमितिनव्याः॥

(२) (टि०) नव्यास्तु जलावनिवृत्तिवृत्तिरसावृत्ति तेजोवृत्त्यवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्वं, पृथिवीवृत्तिवृत्तिप्रत्यक्षविषयावृत्तिगुणत्वसाक्षाद्व्यापरजातिमत्वम्वा गुरुत्वमित्याहुः॥

(३) (टि०) पृथिवीवृत्त्यवृत्तिजलवृत्ति वृत्तिगुणत्वसाक्षाद्व्यापरजातिमान् स्नेहइत्यपिद्रष्टव्यम्।

नेनतत्सिद्धिसंभवात् । केचित्तुचूर्णपिण्डीभावहेतुर्गुणःस्नेहइ त्याहुः ॥ तन्न, जलस्यैवचूर्णपिण्डीभावहेतुत्व स्वीकारादसं भवापत्ति रतिव्याप्तिश्च, ॥ सद्विविधोनित्यानित्यभेदात्, नित्यःपरमाणौ, कार्येऽनित्यमिति, ननुघृततैलादावपिस्नेहो पलब्धेः कथंतस्यजलविशेषगुणत्वमितिचेन्नतदन्तःपातिजलस्नेह स्य तत्रोपलंभात् कालिन्दीजलश्यामादिवत् तत्रतत्रौपाधिकप्र त्ययसंभवात् जलस्यैवस्नेहसमवायिकारणत्वात् नचस्नेहत्वाव च्छिन्नं प्रतिजलत्वेनकारण तायावक्तुमशक्यत्वात् स्नेहत्वस्यनि त्यस्नेहसाधारणत्वेनाति प्रसक्ततयाजन्यतानवच्छेदकत्वात्, ज न्यस्नेहत्वस्यतदवच्छेदकत्वेपि जलत्वस्यनित्यवृत्तित्वेन कारणता नवच्छेदकत्वादितिवाच्यं जन्यजलत्वस्यैवकारणतावच्छेदकत्वा त्, जन्यजलसमवायिकारणतावच्छेदकतयाच नित्यजलत्वसि द्धिरितिकेचित्, तच्चिन्त्यम्, वस्तुतस्तुनित्यानित्योभयसाधारण जलत्वजातेः प्रागेवप्रतिपादितत्वात्, ॥ संस्कारंनिरूपयतिगग नेति, । सत्तागुणत्वसंयोगत्वादिकमादाय रूपसंयोगा ।

**मू० । गगनसमवेतसमवेतत्व रहित मूर्तामूर्तसमवेत समवेतवान् संस्कारः, ॥**

दावतिव्याप्तिवारणायरहितान्तम्, चरमसमवेतविशेषणं, ननुमूर्तोपादानमनर्थकमितिचेन्न ज्ञानत्वादेरात्मसमवेतसमवेतत यातद्वत्वस्य ज्ञानादौसत्वेनाव्याप्त्यापत्ते, स्तदुपादानेच ज्ञानेमू र्तसमवेतत्वस्य विरहेणातिव्याप्तिविरहात्, नन्वेवंमूर्तसमवेतस मवेतत्वेनैव ज्ञानत्वादावतिव्याप्तिवारणसंभवादमूर्तसमवेतत्वस्य

वैयर्थ्यमितिचेन्नरूपादावतिव्याप्तेः मूर्तपृथिवीसमवेतरूपसमवे तरूपत्वत्वस्यतत्रसत्वात्, तदुपादानेचमूर्तामूर्तसमवेत: समवेत तत्वस्यरूपत्वादौविरहेणाति व्याप्तिविरहात् अथैकस्यसंस्कारस्य मूर्तामूर्तसमवेतस्या प्रसिद्ध्याऽसंभवइति चेन्नमूर्तामूर्तसमवेतस मवेतेरयस्यमूर्तसमवेतसमवेतामूर्तसमवेतसमवेतार्थकत्वात्, द्वन्द्वा न्तेश्रूयमाणपदंप्रत्येक मभिसम्बध्यतइतिनियमात्, तथाचमू र्तमनससमवेतवेगाख्यसंस्कारसमवेतामू र्तात्मसमवेत भावनाख्य संस्कारसमवेतसंस्कारत्वमादाय लक्षणसमन्वयसंभवादितिभा वः ॥ सत्रिविधः वेगभावनास्थितिस्थापकभेदात्, वेगःपृथिवी जलतेजोवायुमनोवृत्तिः, स्मृतिजनकभावनाख्यसंस्कारश्चात्ममा त्रवृत्तिः, अन्यथाकृतस्यपुनस्तादवस्थ्यापादकः स्थितिस्थापकः शाखाकटादिपृथिवीमात्रवृत्तिरिति, ननुसंस्कारत्वजातौमानाभा वइति चेन्नभावनारूपावृत्तिजातिमती रूपान्यत्वविशिष्टगुणत्वा त् संयोगवदित्यनेन तत्सिद्धिसम्भवात् नचभावनात्वस्यैवजा तित्व मस्तुनैतावतासंस्कारत्व जातिसिद्धिरितिवाच्यं वेगोरूपा वृत्तिभावनावृत्तिजातिमान् वेगभावनाव्यतिरेकित्वरहितत्वात् भावभावादित्यनेनतत्सिद्धिसंभवात्, ॥ धर्मंनिरूपयतिविहिते ति, विहिता,

## मू० । विहितक्रियासाध्यपुंगुणोधर्मः

वेदोक्ताः, अग्निहोत्रंजुहुयात्, अश्वमेधेनयजेत्, आत्मा नमुपासीत्, अहरहःसंध्यामुपासीत्, दर्शपौर्णमासाभ्यांयजेत्, पशुनारुद्रंयजेत्, अग्नीषोमीयंपशुमालभेत्, प्रतिष्ठितंपूजयेदि, त्यादिवेदबोधिताइतियावत्, साध्यो, जन्यः, वेदप्रतिपाद्यक्रिया

जन्यपुंगुणोधर्मइत्यर्थः, क्रियाजन्यक्रियायामतिव्याप्तिवारणाय गुणइति, पुमित्यस्योपादानं, सस्त्रीकोधर्ममाचरेत् यत्कर्तव्यंत दनयासहेत्यादिश्रुत्यापुरुषस्यैव कर्तृत्वाभिधानात् पत्न्याःसा हित्याभिधानेन कर्तृत्वानभिधानात् धर्मादेश्चकर्तर्येवोत्पादादित्ये तत्सूचनाय, लक्षणंतस्यामवेशादितिबोध्यम्, अधर्मंनिरूपयतिनि षिद्धेति, नब्राह्मणंहन्यात्,

मू० । निषिद्धक्रियासाध्यपुंगुणो ऽधर्मः, श्रोत्रग्राह्योगुणः शब्दः, इतिगुण पदार्थः ।

ब्राह्मणोनसुरांपिबेत्, (१) नकलञ्जंभक्षयेत्, परस्त्रियंना भिगच्छेत्, नग्नांपरस्त्रियंनपश्येत्, परद्रव्यंनापहरेत्, ब्राह्मणंना वगुरेत्,(२) गुरुंनावमन्येदित्यादिवाक्यबोधिताक्रियानिषिद्धा, साध्यो,जन्यः,अत्रधर्मेऽतिव्याप्तिवारणायनिषिद्धेति, क्रियाजन्य क्रियायांनारकीयशरीरेचातिव्याप्तिवारणायगुणेति, पुमित्यस्यो पादानंपूर्ववदिति, ॥ शब्दंनिरूपयतिश्रोत्रेति, शब्दत्वेऽति व्याप्तिवारणायगुणेतिविशेष्यदलं, रूपादावतिव्याप्तिवारणा यश्रोत्रग्राह्येतिविशेषणदलम्, नचचरमशब्दस्यातीन्द्रियतयातत्रा व्याप्तिरितिवाच्यं श्रोत्रग्राह्यतावच्छेदवान् गुणःशब्दइत्यस्यवि

---

(१) (टि०) विषाक्तवाणहतमृगपक्षिमांसं, शुष्कमांसं वाकलञ्जम् तदुक्तम्, विषाक्तेनैववाणेन हतोयोमृगपक्षिणौ, तयोर्मांसंकलञ्जंस्याच्छुष्कमांसमथापिवेति ॥

(२) (टि०) अवगोरणं हन्तुमुद्यमः ॥

वक्षितत्वात्, श्रोत्रग्राह्यतावच्छेदकशब्दत्वस्य तत्रापिसत्वाल्लक्ष णसमन्वयादिति, ॥ पृथिव्यादिनवद्रव्येषुयत्संख्याकागुणाः सन्तितानाहुर्वृद्धाः वायोर्नवैकादशतेजसोगुणाजलक्षिति प्राण भृतांचतुर्दश ॥ दिक्कालयोः पञ्चषडेवचाम्बरेमहेश्वरेऽष्टौमनस स्तथैवचेति, अयमभिप्रायः, रूपरसगन्धस्पर्शसंख्यापरिमाणपृ थक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्व संस्काराश्चैतेचतुर्दश गुणाः पृथिव्यां, गन्धंविहायस्नेहंचादाय चतुर्दशगुणाजले, रू पस्पर्शसंख्यापरिमाण पृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसं स्काराश्चैत एकादशगुणास्तेजसि, स्पर्शसंख्यापरिमाणपृथक्त्वसं योगविभागपरत्वापरत्व संस्काराश्चैतेनवगुणावायौ, संख्यादि पञ्चशब्दश्चैते षड्गुणाआकाशे, संख्यादिपञ्चगुणाः काले, दि शिच, संख्यादिपञ्चबुद्धीच्छाप्रयत्नाश्चैतेऽष्टौगुणाःपरमात्मनि, संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धि सुखदुःखे च्छाद्वेषप्रयत्नसंस्कारा दृष्टाश्चैतेगुणाजीवात्मनि, संख्यापरिमाण पृथक्त्वसंयोगविभागपरत्वापरत्व संस्काराश्चैतेगुणामनसि, सन्ती ति, ॥ अथरूपरसगन्धस्पर्शस्नेहशब्दसांसिद्धिक द्रवत्वबुद्धिसु खदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चै तेविशेषगुणाः, तत्रपाक जरूपरसगन्धानुष्णाशीत स्पर्शाश्चैतेविशेषगुणापृथिव्याम्, अ भास्वरशुक्लरूपमधुररस शीतस्पर्शसांसिद्धिकद्रवत्वस्नेहाश्चैते वि शेषगुणाजले, भास्वरशुक्लरूपोष्णस्पर्शौ विशेषगुणौतेजसि, अ पाकजानुष्णाशीतस्पर्शैकविशेषगुणोवायौ, शब्दैकविशेषगुणश्चा काशे, बुद्धिसुखदुःखेच्छायत्नधर्माधर्मभावनाख्य संस्काराश्चैते विशेषगुणाजीवात्मनि, नित्यज्ञानेच्छायत्नास्त्रयोविशेषगुणाः प रमेश्वरे, सन्तीति, संख्यापरिमाणपृथक्त्वसंयोग विभागपर

त्वापरत्वद्रवत्वानिद्वीन्द्रियग्राह्यगुणाः, रूपरसगन्धस्पर्शबुद्धिसुख दुःखेच्छायत्नद्वेषशब्दा एकैकेन्द्रियग्राह्या, स्तत्ररूपंषड्विधं नीलपीतरक्तहरितकपिशभेदात्, तत्रशुक्लरूपंभास्वराभास्वरमपि प्रत्येकंद्विविधं नित्यानित्यभेदात्, परमाणुगतंनित्यम्, कार्यगतं चानित्यम्, रसोऽपिषड्विधः मधुराम्ललवणकटुकषायतिक्त भेदात्, पृथिव्यांषड्विधोरसः, जलेचमधुरएवरसः, नारिकेलजलेतस्योपलम्भात्, नचजम्बीररसेतिक्तस्योपलम्भान्मधुरएवेत्यसंगतमितिवाच्य माश्रयौपाधिकस्यतस्यसत्वात्, नचनारिकेलजलेप्यौपाधिकरसोऽस्त्वितिवाच्यं धात्रीफलादिभक्षणस्यार्थाच्चर्वितधात्रीफलस्यजलमाधुर्यव्यञ्जकत्वा, दन्यत्रतत्कल्पनागौरवात्, अन्यरसस्याननुभवाच्चेति, ॥ तत्रगन्धोऽपिद्विविधः सौरभासौरभभेदात्, तत्रस्पर्शस्त्रिविधः शीतोष्णानुष्णाशीत भेदात्, तत्रशीतस्पर्शोजले, उष्णस्पर्शस्तेजसि, तत्रानुष्णा शीतस्पर्शोद्विविधः पाकजापाकजभेदात्, तत्रपाकजःपृथिव्या, मपाकजोवायौ, जलेपृथिव्यांचोष्णस्पर्शस्य पृथिव्यांवायौचशीतस्पर्शस्यानुभवश्चौपाधिकोबोध्यः, उपाधिशून्येषुतेषूष्णस्पर्शस्य, तयोः शीतस्य, चानुपलब्धेरिति, तत्रसंख्यैकत्वादिपरार्द्धान्ता नानाविधानत्रद्रव्यनिष्ठा, तत्रैकत्वंद्विविधंनित्यानित्यभेदात्, नित्यगतंनित्यमनित्यगतमनित्यम्, तत्रपरिमाणंचतुर्विधमम णुह्रस्वदीर्घपरममहत्परिमाणभेदात्, तत्राणुपरिमाणं परमाणुद्व्यणुक मनोवृत्ति, ह्रस्वपरिमाणंघटादिवृत्ति, दीर्घपरिमाणञ्चपृथिव्यादिवृत्ति, परममहत्परिमाणमाकाशादिचतुष्टयवृत्ति, तत्राणुपरिमाणंद्विविधंनित्यानित्यभेदात्, परमाणुगतंमनोगतञ्चनित्यं, द्व्यणुकादि गतमनित्यमिति, अनित्यपरिमाणंत्रिविधं संख्याप्रचय परि

माणजभेदात्, तत्रसंख्याजन्यपरिमाणं द्व्यणुकत्रसरेणुवृत्ति, परिमाणजपरिमाणंघटादीनां, शिथिलाख्यःसंयोगः, प्रचय, स्तज्जन्यं परिमाणं तूलकादीनाम्, अथपरममहत्परिमाणमणुपरिमाणञ्च नपरिमाणजनकं, परिमाणंहि स्वाश्रयारब्धपरिमाणारम्भकम्भवति, भवतिचसजाती (१) योत्कृष्टपरिमाणजनकम्, प्रथमेस्वाश्रयारब्धद्रव्यस्यैवाभावात्, अभावाच्चोत्कृष्टपरिमाणस्य, आकाशादिपरिमाणादुत्कृष्टपरिमाणस्यानुभवेनाविषयीकरणात्, द्वितीये अणुपरिमाणाश्रयारब्धद्व्यणुकत्रसरेण्वादेस्सत्वेपि तत्परिमाणंप्रत्यणुपरिमाणस्याजनकत्वात् ततउत्कृष्टस्यसूक्ष्मस्यपरिमाणस्यानुभवेनाविषयीकरणात्, त्रसरेण्वादेरप्रत्यक्षत्वापत्तेश्च, प्रत्यक्षकारणस्यमहत्वस्यतदातत्रासम्भवात्, ननुतर्हिद्व्यणुकपरिमाणम्प्रति त्रसरेणुपरिमाणम्प्रतिचकिंकारणमितिचेत्, द्वित्वत्रित्वादेःकारणत्वात्, नचतत्रप्रत्यक्षात्मकापेक्षाबुद्धेरभावादितिवाच्यं परमेश्वरापेक्षाबुद्धेस्तत्रसत्वात्, अतएवतदाश्रयतयेश्वरसिद्धिः॥ कारणत्वञ्चान्यथासिद्धिशून्यत्वेसति, नियतपूर्ववृत्तित्वम्, (२) तच्च त्रिविधं, समवाय्यसमवायिनिमित्तकारणत्वभेदात्, तत्रसमवाय

(१) (टि॰) साजात्यञ्चपरिमाणविभाजकरूपेणबोध्यम् ।

(२) (टि॰) अत्रान्यथासिद्धित्वस्यानुगतस्याभावात्, नियतपूर्ववर्त्तिवृत्तिदण्डत्वादिभेदकूटवत्वेसति, घटनियततपूर्ववर्त्तित्वं घटकारणत्व, मेवञ्चानियत पूर्ववर्त्ति पटादिवारणाय विशेष्यदलम्, विशेषणकुक्षौपटादिभेदनिवेशेचगौरवं, नियतपूर्ववर्त्तित्वञ्चकार्य्याव्यवहितपूर्वक्षणावच्छेदे नकार्य्यसमानाधिकरणात्यन्ताभाव प्रतियोगितानवच्छेदकधर्मवत्वमिति, दण्डत्वादिवारणायसत्यन्तमिति, ॥

सम्बन्धावच्छिन्नकार्यतानिरूपित तादात्म्यसम्बन्धावच्छिन्नकारत्वं समवायिकारणत्वम्, घटादिकार्यम्प्रतिकपालादेस्समवायिकारणत्वं, द्रव्यगुणकर्मसमवायिकारणत्वंद्रव्यस्यैवेति, समवायसम्बन्धावच्छिन्नकार्यतानिरूपित समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्नात्म गुणभिन्ननिष्ठकाणत्वमसमवायिकारणत्वम्, । इच्छाम्प्रतीष्टसाधनताज्ञानादेरसमवायिकारणत्व वारणायात्मगुणभिन्ननिष्ठेति, घटकार्यम्प्रतिकपालद्वयसंयोगस्य समवायेन, घटरूपम्प्रतिकपालरूपस्य स्वसमवायिसमवेतत्वसम्बन्धेना, समवायिकारणत्वम्, उभयत्रलक्षणगमनार्थमन्यतरसम्बन्धावच्छिन्नत्वस्योपादानम्, इदञ्चसामान्यलक्षणं, विशेषतः पटादिसमवायिकारणत्वन्तु पटत्वावच्छिन्नकार्यतानिरूपिततुरीतन्तु संयोगभिन्ननिष्ठसमवायसम्बन्धावच्छिन्नकारणत्वम्, तुरीतन्तुसंयोगेऽतिव्याप्तिवारणायभिन्नान्तं, सामान्यलक्षणेतुनैतद्भिन्नत्वमपेक्षितं, पटतुरीयसंयोगम्प्रतितस्याप्यसमवायिकारणत्वात्, एवमभिघातासमवायिकारणत्वलक्षणे वेगभिन्नत्वंदेयं, नतुसामान्यलक्षणे, वेगस्यापिवेगस्पन्दम्प्रत्यसमवायिकारणत्वात्, एवमन्यत्राप्यूहनीयम्, असमवायिकारणत्वन्तु गुणेकर्मण्येवास्ति, नान्यत्रेतिबोध्यम् ॥ निरुक्तोभयकारणताभिन्नानिमित्तकारणता, घटादिकार्यम्प्रतिदण्डादेर्न्निमित्तकारणत्वात्, इच्छाम्प्रतीष्टसाधनताज्ञानादेश्चनिमित्तकारणत्वा, देवमन्यत्राप्यूह्यम् ॥ अन्यथासिद्धत्वञ्चावश्यक्लृप्तानियत पूर्ववृत्तिभिन्नत्वं, तदाश्रयोऽन्यथासिद्धः, सचपञ्चविधः कारणतावच्छेदककारणरूपाकाशकारणजनकरासभभेदात्, तथाहियत्कार्यम्प्रतिकारणस्य नियतपूर्ववृत्तित्वं येनरूपेणगृह्यतेतद्रूपं प्रथममन्यथासिद्धं, नच

विनिगमकाभावाद्दण्डत्वमत्रकारणं, दण्डएवान्यथासिद्ध इत्ये वकिन्नरोचतइतिवाच्यं दण्डत्वस्यस्वाश्रयदण्डघटितपरम्परासम्बन्धेन ( १ ) कारणत्वस्यवक्तव्यतया कारणतावच्छेदकसंसर्गतावच्छेदकगौरवात्, गौरवाच्चदण्डेतरासमवेतत्वेसतिसकलदण्डसमवेतत्वरूपदण्डत्वत्वस्य कारणतावच्छेदकताया वक्तुमशक्यत्वात्. एवमग्रेऽपि, यस्ययत्कार्यम्प्रतिस्वातन्त्र्येणा, र्थात्साक्षात्सम्बन्धेना, न्वयव्यतिरेकौनगृह्येते, कारणमादायैवा, र्थात्कारणघटितपरम्परासम्बन्धेनैवा, न्वयव्यतिरेकौस्त, स्तत्कार्यम्प्रति तत् द्वितीयमन्यथासिद्धम्, यथाघटकार्यम्प्रतिदण्डरूपं, यस्यान्यम्प्रतिनियतपूर्ववर्तित्वं गृहीत्वैवयत्कार्यम्प्रतिनियत पूर्ववृत्तित्वं गृह्यते तत्कार्यम्प्रतितत् तृतीयमन्यथासिद्धं, यथाऽऽकाशस्य शब्दम्प्रतिपूर्ववर्तित्वं गृहीत्वैवघटकार्यम्प्रतिनियतपूर्ववर्तित्वं गृह्यतइत्याकाशस्तृतीयान्यथासिद्धः । आकाशत्वंशब्दसमवायिकारणत्वमित्यभिप्रायेणेदंबोध्यं, नान्यथा, शब्दवत्वरूपत्वेतु पञ्चममध्येतस्यान्तर्भावोबोध्यः, जनकम्प्रतिनियतपूर्ववर्तित्वं गृहीत्वैवयत्कार्यम्प्रतिनियतपूर्ववर्त्तित्वं यस्यगृह्यतेतत्कार्य्यम्प्रतिस चतुर्थोऽन्यथासिद्धः, यथाकुलालम्प्रतिकुलालपितु र्नियतपूर्ववर्तित्वं गृहीत्वैवघटकार्यम्प्रतिनियतपूर्ववर्तित्वंगृह्यत इतिकुलालपिताचतुर्थोऽन्यथासिद्धः, इदमपिकुलालपितृत्वेनबोध्यम्, कुलालत्वेनकुलालमातस्यहेतुत्वात्, कुलालपितृत्वञ्चकुलालजनकत्वेसतिपुंस्त्वम् । अवश्यक्लृप्तनियतपूर्वर्तिभिन्नोरासभः पञ्चमोऽन्यथासिद्धइति, वस्तुतस्तुअन्यथासिद्धस्यैकाविधत्वमेव,

( १ ) ( टि० ) स्वाश्रयदण्डजन्यभ्रमिजन्य कपालद्वयसंयोगवत्वसम्बन्धेन ।

निरुक्तानांदण्डत्वादीनां सर्वेषाम्पञ्चमाक्रान्तत्वादितिध्येयम् ॥ अथपृथक्त्वस्यान्योन्याभावातिरिक्तत्वे मानाभावात्रयोविंशतिरेवगुणास्सन्तु, पटेघटभेदस्यैवपृथक्त्वरूपत्वादितिचेद, त्रकेचित्, अस्मादयम्पृथगिदन्नेति प्रतीत्योर्वैलक्षण्यादितिविषयभेदं विना तन्नोपपद्यतइति तस्यान्योन्याभावातिरिक्तत्वमावश्यकमिति, न चविषयभेदं विनापिघटोस्तिकलशोऽस्तीति विभिन्नाकारकप्रत्ययदर्शनादितिवाच्यम र्थभेदानभ्युपगमेपटोनघटइत्यत्रघटः पटात् पृथगित्यत्रेवपटपदोत्तरं पञ्चमीप्रसङ्गादित्याहु,स्तच्चिन्त्यम्, (१)वस्तुतस्तुएकाश्रमवासिनां चैत्रमैत्रविष्णुदत्तानाम्मध्ये चैत्रोनमैत्रइति वच्चैत्रोमैत्रात्पृथगितिव्यवहारादर्शनादेकाश्रमास्थितिदशायांभेदसत्वेपि पृथक्त्वंनोत्पद्यते, विभिन्नाश्रमदशायाञ्चोत्पद्यते, तदानींचैत्रान्मैत्रः पृथगितिव्यवहारदर्शनात्, पृथक्त्वान्योन्याभावयोर्भेदस्यावश्यकतेति, भेदस्यनित्यत्वं पृथक्त्वस्यचानित्यत्वमितितयोः कथमपिनाभेदसम्भवावकाशइतिदिक् ॥ संयोगस्त्रिविधोऽन्यतरकर्मजोभयकर्मजसंयोगजभेदात्, (२) तत्रप्रथम

---

(१) (टि॰) पृथक्शब्दयोगस्यैव पञ्चमीप्रयोजकत्वं, न तुपृथक्त्वार्थकशब्दयोगस्ये, तिनोक्तदोषइतिचिन्ताबीजम् ॥

(२) (टि॰) अत्रसंयोगत्वेनान्यतरकर्मत्वेन नकार्य्यकारणभावः किन्तुसमवायेनविजातीयसंयोगत्वे नविजातीयकर्मत्वेन, नातःसंयोगजसंयोगेव्यभिचारः नचश्येनशैलसंयोगाधिकरणेशैलेक्रियाविरहात्कथंकारणत्वमितिवाच्यं कार्य्यतावच्छेदकव्यापकसामानाधिकरण्य प्रतियोगित्वस्यैवकारणत्वघटकत्वात्, एवमग्रेपिबोध्यम् ॥ ननुसमवायेनघटतरुसंयोगम्प्रतिस्वाश्रयसमवेतत्वसम्बन्धेन कपालक्रियाया एवकारणत्वं

श्शैलश्येनयोस्संयोगः, द्वितीयोमेषद्वयसंयोगः । तृतीयोऽवय वसंयोगजन्यावयविसंयोगः, यथाहस्तवृक्षसंयोगाच्छरीरवृक्षसं योगः, कपालवृक्षसंयोगाद्धटवृक्षसंयोगः, ॥ तत्रकर्म्मजसंयो गोद्विविधः अभिघातनोदनभेदात्, तत्राभिघातः, शब्दजन कसंयोगः, शब्दाजनकसंयोगो, नोदनइति, विभुद्वयसंयोग स्वीकारपक्षेसंयोगोद्विविधोनित्यानित्यभेदात्, । नित्योविभुद्व यसंयोगः, अनित्यः कार्यरूपः, कार्यस्त्रिविधः प्रागेवोक्तइति, विभागस्त्रिविधोऽन्यतरकर्म्मजोभयकर्म्मजविभागजभेदात्, विभा गजविभागोपिद्विविधः हेतुमात्रविभागजहेत्वहेतुविभागजभेदात्, अन्यतरकर्म्मजविभागस्तु श्येनकर्म्मजश्श्येनशैलविभागः, उभय कर्म्मजविभागश्चमेषद्वयकर्म्मजन्यमेषद्वयविभागः, हेतुमात्रविभा गजविभागश्चयत्र कपालेकर्म्मततः कपालद्वयविभागस्ततोघटा रम्भकसंयोगनाशस्ततोघटनाशस्त तस्तेनैवकपालविभागेन स कर्म्मणः कपालस्याकाशविभागोजन्यते ततआकाशसंयोगनाश स्ततउत्तरदेशसंयोगस्ततः कर्म्मनाशइति, नचतेनकर्म्मणैवकथंदे शान्तरविभागोनजन्यतइतिवाच्यमेक कर्म्मणआरम्भकसंयोगप्र तिद्वन्द्विविभागजनकत्वस्याना रम्भकसंयोगप्रतिद्वन्द्विविभागजन

---

नतुकपालतरुसंयोगस्येति संयोगजसंयोगमानाभावादितिवा च्यं यत्रकपालक्रियया कपालान्तरेणतरुणाचैकदासंयोगस्ततो घटोत्पत्तिकपालक्रियानाशोतत्रततः कलशतरुसंयोगानुपपत्तेः क्रियायानाशा, दतःकपालतरुसंयोग एवकारणमितितत्सि द्धिः ॥ लाघवाद्वासमवायेनैवकपालतरुसंयोगस्य हेतुत्वमिति वदन्ति ॥ ........

कत्वस्याविरोधा, दन्यथाविकसत्क (१) मलकुड्मलभंगप्रसंगात्, तस्माद्यदीदमनारम्भकसंयोग प्रतिद्वन्द्विविभागंजनयेत् तदाऽऽर म्भकसंयोगप्रतिद्वन्द्विविभागंनजनयेत्, नचकारणविभागेनैव द्र व्यनाशात्पूर्वंकुतोदेशान्तरविभागोनजन्यतइतिवाच्य मारम्भक संयोगप्रतिद्विन्द्विविभागवतोऽवयवस्यसतिद्रव्येदेशान्तरविभागा सम्भवात्, द्वितीयस्तावत्, यत्रहस्तक्रिययाहस्ततरुविभागस्त त्रशरीरेऽपिविभक्तप्रत्ययोभवति तत्रशरीरविभागेहस्तक्रियान कारणं, व्यधिकरणत्वात्, शरीरेतुक्रियानास्त्येव, अवयविकर्म्म णोयावदवयवकर्म्मनियतत्वादतस्तत्र कारणाकारणविभागेनका र्य्याकार्य्यविभागोजन्यतइति, अतएवविभागोगुणान्तर, मन्यथा शरीरेविभक्तप्रत्ययोनस्यात्, संयोगनाशेनविभागोऽन्यथासिद्धो भवतीतिगौडचरणाः (२) ॥ पूर्वमेवपरापरत्वेनिरूपितेविभजि तेच, अथबुद्धिर्द्विधास्मृत्यनुभवभेदात्, निवन्धान्तरेबुद्धिः ख्या तिः सात्रिधा सत्ख्यात्यन्यथाख्यात्यसत्ख्यातिभेदात्, नित्या नित्यभेदाद्वाबुद्धिर्द्विधा, नित्यापरमेश्वरे, ऽनित्याजीवात्मनि, तत्रस्मृतिस्संस्कारजन्याबुद्धिः, । नचसोऽयंदेवत्तइति प्रत्यभिज्ञा यामतिव्याप्तिस्तस्यास्संस्कारजन्यत्वादितिवाच्यं संस्कारमात्र जन्यत्वस्यविवक्षितत्वात्, तत्रचक्षुरिन्द्रियसन्निकर्षजन्यत्वस्यापि

---

(१) (टि॰) अयंभावः अग्रावच्छेदेनारम्भकसंयोग प्रति द्वन्द्विविभागजनककर्म्मणा मूलावच्छिन्नारम्भकसंयोग प्रतिद्व न्द्विविभागोत्पत्तिः, तेनचारम्भकसंयोगनाश, स्तेनकमलनाशः स्यादिति ॥

(२) (टि॰) संयोगाभावोविभागः विभागाभावोवासं योग इत्यत्रविनिगमकाभावादुभयोरतिरिक्तत्वमितिसारम् ॥

सत्वात्, नचसंस्कारेतरानुभवजन्यत्वस्यस्मृतौसत्वेनासंभवइति वाच्यमनुभवस्यकरणविधयास्मृतिहेतुत्वात्, लक्षणेचसंस्काराति रिक्तव्यापाराजन्यत्वस्यविवक्षितत्वात्, प्रत्यभिज्ञांप्रतिचक्षुस्संयो गस्यव्यापारविधयाकारणत्वान्नतत्रातिव्याप्तिः, वस्तुतस्तुसंस्का रात्स्मृतिः स्मृतेश्चप्रत्यभिज्ञान. मितिस्मृतिजन्यत्वंप्रत्यभिज्ञायां, नतुसंस्कारजन्यत्व, मितिविवेकः ॥ केचित्तुइन्द्रियासहकृत सं स्कारजन्यज्ञानंस्मृति रितिनप्रत्यभिज्ञायामतिव्याप्तिस्तत्रेन्द्रि यस्यसहकारित्वादित्याहुः, (१) संस्कारम्प्रत्यपेक्षात्मकानुभवस्य कारणत्वंबोध्यम्, नतूपेक्षात्मकस्यापि, तएवनदीयङ्कालिन्दी बहुविततशाखस्तरुरयं समीपेघोषोऽयंव्रजपथिकवृन्दावनमिद म्, इतिश्राव्योनाथोमधुपुरगतोमैत्रमथवा पुरोपेक्षाज्ञानेस्मरणम पिनोद्बोधकशतैरिति ॥ नन्वनुभवत्वेनसंस्कारंप्रतिकारणत्वे स कृदनुभूतवस्तुनस्सकृत्स्मरणानन्तरं स्मरणान्तरानुपपत्तिः सं स्कारस्यफलनाश्यतयाप्रथमस्मरणेन तस्यनाशादितिचेन्नापेक्षा त्मकज्ञानत्वेनकारणत्वात्स्मरणात्मकज्ञानस्यापितथाविधस्यहेतुत यास्मरणान्तरोपपत्तेरिति, तत्रस्मृत्यन्याबुद्धिरनुभूतिः, साचतु र्द्धाप्रत्यक्षानुमित्युपमितिशाब्दभेदात्, तत्करणमपिचतुर्विधं प्र त्यक्षानुमानोपमानशब्दभेदात्, तथाचोक्तंगौतमपादैः प्रत्यक्षा नुमानोपमानशब्दाः प्रमाणानीति, प्रमितिकरणंप्रमाणं, करणे ल्युट् । स्मृत्यन्यभ्रमान्यमितिःप्रमितिः, स्मृत्यन्यभ्रमान्यमितिक रणंप्रमाणमिति, ॥ वेदान्तिनस्तु अनधिगतावाधितार्थगोचरा

(१) (टि॰) उपेक्षात्वञ्चनजातिः चाक्षुषत्वादिनासाङ्कर्यात्, व्याप्यवृत्तित्वाच्च, तदुपेक्षाज्ञानानां तत्तद्व्यक्तित्वेनैवसं स्कारप्रतिबन्धकत्वमिति, अतएवनपरकृसंस्कारकल्पनमिति, ॥

मिति,ः प्रमिति, स्तत्करणंप्रमाणं, तत्षड्विधंप्रत्यक्षानुमानोपमा नशब्दार्थापत्त्यनुपलब्धिभेदात्, प्रमितिलक्षणेप्रमाणलक्षणेचस्मृ तिव्यावृत्त्यर्थं स्मृतिजनकानुभवव्यावृत्त्यर्थमनधिगतेत्यस्योपादा नम्, इदंरजतमितिभ्रमतत्करणयोर्व्यावृत्त्यर्थम बाधितार्थस्यो पादानमितिवदन्ति, तच्चिन्त्यम्, प्रत्यक्षधारास्थलेद्वितीयप्रत्यक्षेप्र मितिलक्षणस्य, तत्करणसंयोगान्तरजनकेप्रमाणलक्षणस्या, व्या प्तेः द्वितीयप्रत्यक्षस्याधिगतार्थगोचरत्वात्, नचतत्रक्षणस्यापि विषयत्वेनानधिगतत्वसम्भवान्नाव्याप्तिरितिवाच्यं क्षणस्यका लात्मकद्रव्यतयातस्य रूपवत्वाभावेनचाक्षुषागोचरत्वात्, स्प र्शाभावेनस्पार्शनागोचरत्वात्, अयंघटोऽयंघटइत्याकारकप्रत्य क्षविषयत्वेन क्षणस्यानुभवेनाविषयीकरणात्, घटंपश्यामीति वत्कालं पश्यामिस्पृशामिचेत्यनुभवासत्वात्, अथकालस्यावि षयत्वे इदानीम्मयाघटोदृष्टइतिस्मरणस्य घटप्रत्यक्षानन्तरोत्प न्नस्य कथंसंभवइति चेत्सावधानमवधार्यताम् । तथाहिघटप्र त्यक्षानन्तरजायमानमेतत्कालीन घटप्रत्यक्षंमत्कर्तृकमितिज्ञाना देवतादृशस्मरणस्यसम्भवः । यदाचज्ञानेऽस्मत्कर्तृकत्वमेतत्का लिकत्वंचनज्ञातं तदाऽयंघटइत्याकारकस्मरणमेवभवतीतिरमणी यसमाधिः ॥ एवंसिसाधयिषाधीनानुमितौ तत्करणव्याप्तिज्ञा नेचाव्याप्ति, रधिगतार्थस्यैवानुमितिविषयत्वात्, एवंश्रोतव्यो मन्तव्योनिदिध्यासितव्यस्साक्षात्कर्त्तव्य इत्यादिश्रुत्यासमानवि षयकशाब्दानन्तरानुमितिदर्शनात् प्रमितिलक्षणेप्रमाणलक्षणेचा व्याप्तिवारणस्यगीर्वाणगुरूणामप्यशक्यत्वात्, नचरूपान्तरेणश्रु तस्यरूपान्तरेणमननेनकोपिदोषइतिवाच्यं श्रोतव्योमन्तव्यइति समानाधिकरणश्रुते, र्लाघवाच्च, येनैवरूपेणश्रवणंतेनैवरूपेणमन

स्योचितत्वात् नचरूपान्तरेणश्रुतस्यरूपान्तरेणमननेश्रद्धा प्रक्षालनंशास्त्रव्यापारोनिर्वहति, श्रुतस्यामननात्, किञ्चनतद्रूपमस्तीश्वरेयन्नवेदेश्रुतमस्ती, तिप्रथमस्तबकेवर्द्धमानचरणाः, एतेनकारणदोषवाधकप्रत्ययरहिताग्रहीतग्राहिज्ञानं प्रमिति, स्तत्करणंप्रमाणं, सुन्दरोऽहमिति प्रत्ययवारणायकारणदोषरहितेति, इदंरजतमित्यादिज्ञानवारणायवाधकप्रत्ययरहितेति, स्मृतिवारणायागृहीतग्राहीती, तियदुक्तंमीमांसकेन, तदपिचिन्त्यम् । प्रत्यक्षात्मकसिद्ध्यात्मकपरामर्शानन्तरमनुमिति र्जायतामितीच्छया यत्रानुमितिस्तत्रानुमितौतत्करणे, चाव्याप्तेः मन्तव्यश्चोपपत्तिभिरितिस्मरणात्, एकलिङ्गावगतेऽपिलिङ्गान्तरेणतदनुमानात्, तथाचद्वितीयादिलिङ्गजन्यानुमितौ तत्करणे, चाव्याप्ति, रनुमितस्यैवानुमानात् । एवम्प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्तेतर्करसिकाइति वाचस्पतिमिश्रवाक्यात् प्रत्यक्षानन्तरानुमितिबोधाचादनुमितौतत्करणे, चाव्याप्तेश्च, निरुक्तश्रुतिबोधितानुमितौतत्करणेचनितरान्तथेति ॥ अर्थापत्तिरपिनप्रमाणान्तरं, तस्याव्यतिरेकानुमानान्तर्गतत्वात्, पीनोदेवदत्तोदिवानभुङ्क्तइत्यत्ररात्रिभोजित्वाभावव्यापकाभाव प्रतियोगिपीनत्ववान्देवदत्तइति परामर्शात्पीनत्वलिङ्गकानुमितेस्तत्रस्वीकारात् । केचित्त्वर्थापत्तिर्न्नप्रमाणान्तरं, तथाहिजीवतश्चैत्रस्य गृहाभावदर्शनेनवहिर्भावस्यादृष्टस्य कल्पनाऽर्थापत्तिर्वक्तव्या, साचानुमानएवान्तर्भवति, तथाहियदाखल्वव्यापकस्सन्नेकत्रनास्तितदान्यत्रास्ति, यदाचाव्यापकएकत्रास्तितदान्यत्रनास्ती, तिसुकरःस्वशरीरएवव्याप्तिग्रहः, तथाचसतिचैत्रोवहिस्सत्ववान्जीवित्वेसतिगृहवृत्त्यभावप्रतियोगित्वात् चत्वरेस्थितिविशिष्टास्मद्वदित्यने

न, वह्निभावस्यादृष्टस्यदर्शनमनुमान, मित्यन्यत्रविस्तरइत्याहुः ॥ अनुपलब्धिरपिमप्रमाणान्तरं, इन्द्रियेणाभावप्रत्यक्षजननेसहका रित्वमात्रंतस्याभ्युपेयते, व्यापारस्यचाभावेन प्रमाणत्वाभावाच्च, प्रमाणस्यव्यापारद्वाराफलजनकत्वात्, करणत्वस्यव्यापारघटित त्वात्, तस्यास्साक्षादेवाभावप्रत्यक्षहेतुत्वात्, ॥ यत्त्विन्द्रियेणाभा वज्ञानंनजायते, किन्त्वनुपलब्धिमात्रादेव, तिमतं, तन्नसाधुप थमारोहति, एतद्रसालफलंमधुरंनैतद्रसालफलमितिज्ञानस्यात्रमा धुर्यं नात्रमाधुर्यमिति प्रत्ययस्यरसनासम्बन्धम्विनानुभवेनाविन् षयीकरणात्, यथावाऽन्धस्यात्रघटेनीलरूपंनात्रघटइति प्रत्ययस म्भावनाया अप्यसम्भवात्, तस्मादिन्द्रियजमेवाभावानां लौकि कप्रत्यक्षंभवती,तिमुक्तत्वज्ञैरपिवक्तव्यमिति, नचगेहान्निर्गतचैत्र स्यस्थानान्तरस्थितिदशायांमैत्रं प्रतिजज्ञदत्तोवदतिमार्गे, गेह इदानींचैत्रोनास्तीति, कथमुपपद्यतइतिवाच्यं चैत्रगेहगतस्यजज्ञ दत्तस्येन्द्रियसम्बद्धगृहविशेषणतया चैत्राभावस्यप्रत्यक्षंपूर्व्वंजातं तदनन्तरञ्चस्थानान्तरेचैत्राभावंस्मृत्वास, गेहइदानींचैत्रोनास्ती तिप्रयुङ्क्ते, श्रोतुश्चतदानींशाब्दएव प्रत्ययश्चैत्राभावस्या, न्यथे न्द्रियसम्बन्धाभावस्थलेप्यनुपलब्धिस्वीकृत्या भावग्रहस्वीकारे पुत्रस्यकाश्यांस्थितिदशायांतत्पितुः काश्यांयदिपुत्रःस्यात्तदोप लभ्येत, यतोनोपलभ्यतेऽतस्तन्नास्तिनष्टोवेति तदभावग्रहसम्भ वेनोरस्ताडनपूर्व्वकरोदनंप्रसज्येत, तस्माद्योग्यानुपलब्धिरिन्द्रि यसम्बन्धदशायामेवभवतीत्यवश्यंवक्तव्य, मित्यन्यत्रविस्तरः ॥ प्रमितिलक्षणघटकभेदप्रतियोगितावच्छेदकभ्रमत्वञ्च (१) तद

---

(१) (टि०) तत्सम्बन्धावच्छिन्नप्रतियोगिताक तदभाव वन्निष्ठविषयतानिरूपित तत्सम्बन्धावच्छिन्न तन्निष्ठविषयताक

त्वरूपत्वे वह्निमत्पर्वतवान्देश इतिज्ञानस्य संयोगसम्बन्धाव च्छिन्नप्रतियोगिताकपर्वताभाववद्वह्निनिष्ठावच्छेदकत्वाख्यवि षयतानिरूपितपर्वतप्रकारताकत्वेन भ्रमत्वंस्यादतोविशेष्यप्र कारभावनिवेशः,॥ तत्त्वस्याननुगतत्वात्, सावच्छिन्ननिरवच्छि न्नप्रकारताकभ्रमसाधारण्यानुरोधाच्चाह विशेष्यतेति, अन्तस्त्व निरूपकत्वानिवेशे पर्वतोवह्निमानितिज्ञानस्य स्वाश्रयावृत्ति त्वसम्बन्धेन जलत्वावच्छिन्नविशेष्यताविशिष्टप्रकारताकत्वेन भ्रमत्वंस्यादतस्तन्निवेशः, तथाचतज्ज्ञानीयवह्निप्रकारताया जलत्वावच्छिन्नविशेष्यत्वानिरूपकत्वाददोषः, स्वाश्रयावृत्ति त्वानिवेशेउक्तज्ञानस्य स्वीयविशेष्यताविशिष्टप्रकारताकत्वादु क्तदोषस्तदवस्थएवातस्तन्निवेशः, चतुष्टयसम्बन्धघटकसामाना धिकरण्यानिवेशे गुणोद्रव्यमितिज्ञानस्यासङ्ग्रहःस्यात्, त ज्ज्ञानीयनिरवच्छिन्नद्रव्यत्वप्रकारतायाः स्वविशिष्टनिरवच्छि न्न गुणत्वनिरूपकताकाधिकरणतासम्बन्धेन विशेष्यगुणवृत्ति त्वात्, तन्निवेशेचतादृशनिरूपकतायाः तादृशप्रकारतावत्रधि करणत्वेन निरवच्छिन्नद्रव्यत्वनिरूपकतायाएवधर्त्तुं शक्यत्वान्न दोषः, द्वितीयसम्बन्धानिवेशेवह्निमज्जलमितिज्ञानस्य स्वीयसं योगसम्बन्धावच्छिन्नवह्नित्वा वच्छिन्नप्रकारताविशिष्टसंयोग कालिकान्यतरसम्बन्धावच्छिन्नवह्नित्वा वच्छिन्ननिरूपकता काधिकरणतासम्बन्धेन विशेष्यजलवृत्तिवह्नित्वा वच्छिन्नप्रका रताकत्वेनासंग्रहः स्यात्, निवेशेचसंयोगसंसर्गमात्रावच्छिन्न वह्नित्वावच्छिन्न निरूपकताएवधर्त्तुं शक्यत्वान्नदोषः, तृतीय सम्बन्धानिवेशे सावच्छिन्नघटत्वप्रकारताकज्ञानविशेष्यक वि षयितासम्बन्धावच्छिन्न निरवच्छिन्नघटत्वप्रकारताकज्ञानासं ग्रहःस्यात्, तज्ज्ञानीयप्रकारतायाः स्वविशिष्टसावच्छिन्नघटत्व

भाववन्निष्ठविशेष्यता निरूपिततन्निष्ठप्रकारताकत्वम् । विशेष्यता विशिष्टप्रकारताशालित्वपर्य्यवसितम् । वैशिष्ट्यञ्चस्वनिरूपकत्व स्वाश्रयावृत्तित्वोभयसम्बन्धेन, स्वंविशेष्यता, सम्बन्धघटकावृत्तित्वघटकवृत्तित्वञ्चस्वविशिष्टनिरूपकता काधिकरणतासम्बन्धेन, स्वंप्रकारता, प्रकारतावैशिष्ट्यञ्च स्वसामानाधिकरण्य स्वनिरूपितसंसर्गतावच्छेदकतापर्य्याप्त्य नधिकरणपर्य्याप्तावच्छेदकताक संसर्गत्वानिरूपित्व स्वानवच्छेदकपर्य्याप्तावच्छेदकत्वानिरूपितत्व स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन, स्ववृत्तित्वञ्च

---

निष्ठनिरूपकता काधिकरणतासम्बन्धेन विशेष्यवृत्तित्वात्, तन्निवेशेच निरवच्छिन्नघटत्वनिष्ठनिरूपकताया एवधर्त्तुं शक्यत्वान्नदोषः, अवच्छेदकत्वसम्बन्धावच्छिन्न प्रतियोगिताकस्वाभाववद्धर्म्मानवच्छिन्नत्वंतदर्थं, स्तेनमघटोद्रव्यमितिज्ञानस्यसंग्रहः ॥ चतुर्थसम्बन्धानिवेशे निरवच्छिन्नघटत्वप्रकारताकज्ञानविशेष्यकविषयिता सम्बन्धावच्छिन्नसावच्छिन्न घटत्वप्रकारताकज्ञानस्य स्वीयप्रकारताविशिष्टनिरवच्छिन्न घटत्वनिरूपकताकाधिकरणतावद्विशेष्यकत्वादसंग्रहःस्यात्, तन्निवेशे च सावच्छिन्नघटत्वनिरूपकताया एवधर्त्तुं शक्यत्वान्नदोषः ॥ प्रमेयोनास्तीत्यत्र स्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वांशे प्रमेयत्वावच्छिन्नत्वज्ञानस्य भ्रमत्वोपपत्त्यर्थमाद्यद्वेति, पर्वतोवह्निमानितिज्ञानउदासीन विशेषणतामादायातिव्याप्तिवारणाय स्वनिरूपकत्वनिवेशः, स्वीयविशेषणतामादाय तत्रैवातिव्याप्तिवारणाय द्वितीयसम्बन्धनिवेशः, वाधिकरणधर्म्मावच्छिन्नाभावमादायातिव्याप्तिवारणाय प्रतियोगितायां यत्किञ्चिद्रूपवृत्तित्वनिवेशः, अन्यत्स्पष्टम् ॥

स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन, स्वमत्रनिरूपकता, यद्वा विशेषणताविशिष्टविषयतानिरूपकत्वं, तत्, विशेषणतावैशिष्ट्य ञ्च स्वनिरूपकत्वस्वविशिष्टयत्किञ्चिद्रूपवृत्तिप्रतियोगिता काभा वत्वनिष्ठत्वोभयसम्बन्धेन, प्रतियोगितायांस्ववैशिष्ट्यञ्च स्वाव च्छिन्नत्व स्वानवच्छेदकसम्बन्धानवच्छिन्नत्वोभयसम्बन्धेन, स्वं विशेषणता, रूपवृत्तित्वञ्च स्वावच्छेदकतापर्य्याप्त्यनुयोगिताव च्छेदकत्व स्वनिरूपकानुयोगितानिरूपितानिरूपकतावच्छेदकता पर्य्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन, स्वमत्रप्रतियोगि ते, तिदिक् ॥ सांख्यकारास्तु प्रमाणंसप्तविधंप्रत्यक्षानुमानोपमा नशब्दार्थानुपलब्ध्यैतिह्यभेदात्, ऐतिह्य मिहवटेयक्षोस्तीतिवाक्यं परम्पराश्रुतमात्रंयत्रतत्रबोध्यम्। अनुपलब्धिरपिर्यदिस्यात्तदोपल भ्येत यतोनोपलभ्यतेऽतोनास्तीतियत्रतत्राभावेप्रमाणम्। अर्थाप त्तिस्तु पीनोदेवदत्तोदिवानभुङ्क्तइत्यत्ररात्रिभोजित्वं विनापीन त्वमनुपपन्नमितिरात्रिभोजित्वे प्रमाणमितिवदन्ति, ॥ तदपिचि न्त्यं, पूर्व्वोक्तयुक्तेः ॥ सांख्याचार्य्यास्तु प्रमांप्रतिकारणंप्रमाण म् । असन्दिग्धाविपरीतानधिगतविषयाचित्तवृत्तिः बोधश्चपौ रुषेयः फलं, प्रमा, तत्साधनं प्रमाणमिति, तत्त्रिविधंदृष्टानुमा नाप्तवचनभेदात्, अनुमानंत्रिविधंपूर्व्ववच्छेषवत्सामान्यतोदृष्ट भेदादितिप्राहु, स्तदपिचिन्त्यं, पूर्व्वोक्तयुक्तेः । प्रत्यक्षंपूर्व्वमेवनि रूपितंविभजितञ्च, प्रसंगात्पुनरपिलक्ष्यतेविभज्यतेच, ज्ञानाक रणकज्ञानंप्रत्यक्षं, तच्चषड्विधंचाक्षुषत्वाच श्रावणघ्राणजरासन मानसभेदात्, तत्रचाक्षुषप्रत्यक्षेसंयोगसंयुक्तसमवायसंयुक्तसम वेतसमवायसंयुक्तविशेषणता संयुक्तसमवेतविशेषणता संयुक्त समवेतसमवेतविशेषणताभेदात् षड्विधस्सन्निकर्षः कारणम्,

त्वाचप्रत्यक्षेत्वक्संयोगादिषड्विधः सन्निकर्षः कारणम्, श्रावण प्रत्यक्षेच श्रवणसमवाय श्रवणसमवेतसमवाय श्रवणसमवेतवि शेषणताश्रवणसमवेतसमवेत विशेषणताभेदाच्चतुर्विधस्सन्निकर्षः कारणम्, घ्राणजप्रत्यक्षेचघ्राणसंयुक्तसमवाय घ्राणसंयुक्तसमवे तसमवाय घ्राणसंयुक्तसमवेतविशेषणता घ्राणसंयुक्तसमवेतसमवे तविशेषणताभेदाच्चतुर्विधस्सन्निकर्षः कारणम्, एवंरासनप्रत्यक्षे रसनसंयुक्तसमवायादिचतुर्विधस्सन्निकर्षः कारणम्, ॥ मानसप्र त्यक्षेचमनस्संयोगादिषड्विधस्सन्निकर्षः कारणम्, तथाहि विषयतासम्बंधेन द्रव्यविषयकचाक्षुषप्रत्यक्षंप्रतिसमवायेन चक्षु स्संयोगः कारणम्, नचान्धकारे घटेचक्षुस्संयोगस्यसत्वेपि प्रत्य क्षानुदयात्व्यभिचारइतिवाच्य मालोकसंयोगस्यापिसहकारिका रणत्वात्, नचतत्रैवघटान्तर्वर्तिप्रदीपसंयोग दशायामन्वयव्य भिचारस्तदवस्थएवेतिवाच्य मालोकसंयोगावच्छिन्न चक्षुस्सं योगस्य कारणत्वात्, तस्यतत्रासत्वात्, अथपरमाणौतथाविधस न्निकर्षस्यसत्वात् प्रत्यक्षस्यासत्वेनव्यभिचारस्तदवस्थएवेति चे न्नसमवायेनमहत्त्वस्यकारणत्वात्, परमाणौमहत्त्वाभावान्नव्यभि चारः, नचवायौव्यभिचारइतिवाच्यं समवायेनरूपवत्त्वस्यापि कारणत्वात्, रूपस्यवायावभात्, न चातितप्ततैलस्थवन्हौभर्ज नकपालस्थवन्हौग्रीष्मादौचव्यभिचारइतिवाच्य मुद्भूतरूपवत्त्व स्यापिकारणत्वात्, तत्रतत्रोद्भूतरूपाभावान्नव्यभिचारः, एवं चद्रव्यविषयकचाक्षुषप्रत्यक्षं प्रतिमहत्त्वोद्भूतरूपसहकृतालोक संयोगावच्छिन्न चक्षुस्संयोगः कारणमिति, द्रव्येषु पृथ्वीज लतेजसामेव चाक्षुषप्रत्यक्षगोचरत्वा, दित्यन्यत्रविस्तरः ॥ द्र व्यसमवेतरूपसंयोगैकत्वद्रव्यत्वादिविषयक चाक्षुषप्रत्यक्षं प्रति

सामानाधिकरण्यसम्बन्धेन महत्त्वोद्भूतरूपसहकृतालोक संयोगावच्छिन्न चक्षुस्संयुक्तसमवायःकारणम्, द्रव्यसमवेतसमवेत रूपत्व गुणत्वादिविषयकचाक्षुषप्रत्यक्षं प्रतिसामानाधिकण्य घटितसामानाधिकरणसंबन्धेन महत्त्वोद्भूतरूपवत्त्वसहकृता लोकसंयोगावच्छिन्न चक्षुस्संयुक्तसमवेत समवायः कारणम्, यदाघटादिसावयवद्रव्येचक्षुस्संयोगस्तदैव तत्समवेतादीनां प्रत्यक्षंभवती, तिबोध्यम्, द्रव्यवृत्त्यभावविषयकचाक्षुषप्रत्यक्षं प्रतिचक्षुस्संयुक्तविशेषणताकारणम्, द्रव्यसमवेतवृत्त्यभावविषयकचाक्षुषप्रक्षंप्रतिचक्षुस्संयुक्तसमवेतविशेषणताकारणम्, द्रव्यसमवेतसमवेतवृत्त्यभाव विषयकचाक्षुषप्रत्यक्षं प्रतिचक्षुस्संयुक्त समवेत समवेतविशेषणताकारण, मिति ॥ द्रव्यविषयकत्वाच प्रत्यक्षंउद्भूतस्पर्शवत्त्वसहकृतत्वक्संयोगः कारणम्, नचवायोरपिप्रत्यक्षंस्यान्निरुक्तकारणस्य तत्रसत्वादितिवाच्यमिष्टत्वात्, वायुंस्पृशामीत्यनुव्यवसायस्य वायुप्रत्यक्षप्रमाणत्वात्, केचित्तु रूपवत्त्वस्यापि तत्रकारणत्वान्नापत्तिः वायुरनुमेयएव, नतुप्रत्यक्षः, तथाहि वायुर्नप्रत्यक्षाविषयोद्रव्यत्वेसति रूपरहित्वादाकाशवदित्युनुमानात्तस्य प्रत्यक्षाविषयत्वसिद्धिरित्याहु, स्तन्न, वायुर्वहिःप्रत्यक्षा विषयोमहत्त्वेसतिस्पर्शवत्त्वात् घटवादित्यनेन प्रत्यक्षाविषयत्वस्यतत्रासिद्धिसम्भवात्, नचपूर्वोक्तहेतुनासत्प्रतिपक्षाप्रसंगेन प्रत्यक्षाविषयत्वासिद्धिरितिवाच्यं वायुंस्पृशामीत्यनुव्यवसायस्याधिकस्यसत्वेन वायौप्रत्यक्षविषयत्व साधकहेतोरधिकबलतयावायौ प्रत्यक्षविषयत्वा भावसाधकहेतोर्हीनबलत्वेन समानबलत्वाभावात्सत्प्रतिप्रक्षानवतारादिति, नचैवंद्रव्यप्रत्यक्षेउद्भूतस्पर्शवत्त्वमेव कारणमस्तुरूपवत्त्वस्यानावश्यकत्व

मितिवाच्यं प्रभाप्रत्यक्षेऽव्यभिचारात् प्रभायांस्पर्शस्यासत्त्वात्, नचत्रायौरूपस्य प्रभायांस्पर्शस्यचासत्त्वेन द्रव्यप्रत्यक्षसामान्यंप्र त्यकारणत्व प्रसङ्गइतिवाच्यमिष्टत्वात्, चाक्षुषंप्रतिरूपवत्त्वस्यस्पा र्शनंप्रत्युद्भूतस्पर्शवत्त्वस्य पृथगेवहेतुत्वात्, अस्तुवारूपस्पर्शान्य तरसमानाधिकरणमहत्त्वमेवतत्रकारण, मितिदिक्, ॥ घटादावि न्द्रियसंप्रयोगानन्तरोत्पन्न निर्विकल्पज्ञानात् घटइतिविशिष्टज्ञा नंजन्यते ततोघटमहंजानामीत्यनुव्यवसायः, तद्विषयत्वाद्विशिष्टज्ञा नस्यप्रत्यक्षात्वं, निर्विकल्पज्ञानात्प्राग्विशेषणतावच्छेदकज्ञानस्य विशिष्टवैशिष्ट्यावगाहि ज्ञानजनक (१) स्याभावेन तस्याप्र त्यक्षत्व, मतीन्द्रियत्वाच्च, ॥ एवंरासनादिप्रत्यक्षेरसनसंयुक्त समवाया दीनांकारणत्वंबोध्य, मितिलौकिकसन्निकर्षः ॥ अ थालौकिकसन्निकर्षस्त्रिविधः सामान्यलक्षण ज्ञानलक्षणयोग जभेदात्, तत्रसामान्यंलक्षणंस्वरूपंयस्येति विग्रहादिन्द्रियस म्बद्धविशेष्यकज्ञानप्रकारीभूतधर्मोऽर्थः । नत्विन्द्रियसंबद्धवृत्ति धर्मस्तथा, अन्यथाधूलीपटलेधूमत्व ग्रहान्निखिलधूमग्रहानुपप त्तिप्रसंगात्, धूमत्वस्यधूलीपटलावृत्तित्वात्, ॥ ज्ञानंलक्षणंस्वरू पंयस्येतिविग्रहात् सामान्यधर्म्मप्रकारकज्ञानंतदर्थः, चन्द्रनखण्डे इन्द्रियसन्निकर्षात् सौरभस्मरणेनचसुरपिचन्दनमितिसौरभां ऽशेऽलौकिकंचन्दनांशेलौकिकंज्ञान, मेवंसतिदोषे, रङ्गेरजतत्व प्रकारेणरजतज्ञान,मुपपद्यते, इतिज्ञानलक्षणस्यावश्यकत्वमिति ॥

---

(१) (टि॰) दण्डोरक्तोनवेतिसंशयानन्तरं रक्तदण्डवा न्पुरुषइति ज्ञानानुदयादतो विशिष्टवैशिष्ट्यावगाहिबुद्धित्वाव च्छिन्नम्प्रतिविशेषण तावच्छेदकप्रकारकनिश्चयस्य कारणत्वम भ्युपगम्यत इति, ॥

योगजोद्विविधः चिन्तासहकृतचिन्ताऽसहकृतभेदात्, तथाचयु क्तस्ययोगिनो विश्वभानंसर्वदैव, युञ्जानस्यचचिन्तासहकारेण प्रत्यक्ष, मिति ।

नैयायिक मैथिलराज पण्डित श्रीमद्विश्वनाथकृत लक्षणावली प्रकाशे प्रत्यक्षखण्ड प्रकाशः समाप्तः ॥

प्रथमखण्ड प्रकाशविकाश
कृतस्थलविशेषविशेषकृतिर्गता ।
नरवनोद्भवलोकपते रुमासुत
पितुर्न्नगरे परिपूर्णताम् ॥

गंगौलीग्राम निवासि श्रीयुतो पाध्यायोप नामक नैयायिक श्रोत्रिय लोकनाथ कृत विषमस्थल टिप्पणी समाप्ता ।

श्रीगणेशाय नमः ।

करणविधयाव्याप्तिज्ञानजन्यंज्ञानमनुमितिः, स्वजन्यपरामर्षवत्वसम्बन्धावच्छिन्न व्याप्तिज्ञानजनकतानिरूपितसमवाय सम्बन्धावच्छिन्नजन्यतावज्ज्ञानमनुमितिरितिनिष्कर्षः, व्याप्तिविषयकानुव्यवसायेऽतिव्याप्तिवारणायं करणविधयेति, ॥ केचित्तु प्रत्यक्षावृत्तिपरामर्ष जन्यवृत्त्यनुभवत्वव्याप्यजातिमती अनुमितिः, संस्कारत्वस्मृतित्वमादायातिव्याप्तिवारणायानुभवत्वव्याप्येती,त्याहुः, ॥ यद्वास्मरणावृत्तिप्रत्यक्षावृत्तिपरामर्षजन्यज्ञानवृत्तिजातिमती अनुमितिरिति, ॥ यत्तुपरामर्षजन्यज्ञानमनुमितिरिति, तत्तुच्छम्, परामर्षविषयकप्रत्यक्षेऽतिव्याप्तेः, नचलिङ्गाविषयकत्वस्य विवक्षितत्वादितिवाच्यं स्वमतेलिङ्गविशिष्टेविधेयभानादसम्भवापत्तेः, परमतेऽपि धूमवत्सधर्म्मापर्वतोवह्निमान् धूमादित्यादौलिङ्गविषयकत्वस्यानुमितौसत्त्वेनाव्याप्तेः, यदिचविषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रतितादात्म्येनविषयस्यकारणतया समवायसम्बन्धावच्छिन्नपरामर्ष त्वावच्छिन्नजनकतानिरूपित समवायसम्बन्धावच्छिन्नजन्यतावज्ज्ञानमनुमितिरित्युक्तौ नातिव्याप्तिरित्युच्यतं तदा व्याप्तिविशिष्टपक्षधर्म्मताज्ञानंपरामर्षः व्याप्तिप्रकारतानिरूपित प्रकृतहेतुविशेष्यत्वावच्छिन्नप्रकारतानिरूपित प्रकृतपक्षविशेष्यताशालिज्ञानं, प्रकृतपक्षवृत्तित्वप्रकारक प्रकृतव्याप्तिविशिष्टहेतुविशेष्यकज्ञानात्मकं, वेत्येकोपादानेऽन्यत्राव्याप्तिः, साध्यसाधनभेदेनचव्याप्तेर्भिन्नतयैकोपा दानेऽन्यत्राव्याप्तेर्दुर्वारत्वात, ॥ परेतुव्याप्तेर्नानात्वेऽपिवह्निव्याप्यधूमवान् पर्वतइत्याकारकपरामर्षत्वावच्छिन्न समवायसम्बन्धावच्छिन्नजनकतानि

रूपितजन्यतावज्ज्ञानवृत्ति प्रत्यक्षावृत्तिजातिमती अनुमिति, स्तत्करणमनुमान, मितिप्राहुः, ॥ तच्चत्रिविधंकेवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्, तत्रवृत्तिमदत्यन्ताभावाप्रतियोगिसाध्यकानुमिति करणंकेवलान्वयि, इदंवाच्यंज्ञेयत्वात् घटवदित्यादौ, सपक्षरहितसाध्यकानुमितिकरणं केवलव्यतिरेकि, पृथिवीतरेभ्योभिन्नतेगन्धवत्त्वादित्यादौ, भेदप्रतियोगितावच्छेदकसाध्यकानुमितिकरणमन्वयव्यतिरेकि, वह्निमान्धूमादित्यादौ, व्याप्तिज्ञानंतद्विषयोहेतुर्वा, ॥ अथवा (१) अन्वयसहचारमात्रगृहीतव्याप्तिकत्वंकेवलान्वयित्वम्, व्यतिरेकसहचारमात्रगृहीतव्याप्तिकत्वं केवलव्यतिरेकित्वम्, उभयसहचारगृहीतव्याप्तिकत्वमन्वयव्यतिरेकित्व, मित्यन्यत्रविस्तरः, ॥ अथसाध्याभाववदवृत्तित्वं व्याप्तिः, साध्याभाववतानविद्यते वृत्तिर्यत्रतस्यभावस्तत्त्वम्, वृत्त्यभावश्चतादृशवृत्तित्वसामान्याभा

---

(१) (टि॰) अयंभावः साध्याभावधर्म्मिकहेत्वभावसामानाधिकरण्य ग्रहाजन्यप्रकृतसाध्यव्याप्तिग्रह विषयहेतुत्वम् प्रकृतहेतुसाध्यककेवलान्वय्यनुमानत्वम् । प्रकृतहेतुसाध्यकान्वयव्याप्त्यवगाहियज्ज्ञान जनकज्ञानवृत्तिविषयितात्वव्यापकी व्यतिरेकसहचारविषयिता भेदस्तज्ज्ञानविषयत्व विशिष्टप्रकृतहेतुत्वं तत्वमितिपर्य्यवसितम्, हेतुधर्म्मिकसाध्यसहचारज्ञानाजन्यप्रकृतसाध्यव्याप्तिग्रहविशेष्यत्वं प्रकृतहेतुसाध्यककेवलव्यतिरेकित्वम्, हेतुधर्म्मिकसाध्यसहचार ग्रहजन्यसाध्याभावधर्म्मिकहेत्वभाव सहचारग्रहजन्य व्याप्तिग्रहविशेष्यत्वं प्रकृतहेतुसाध्यकान्वय व्यतिरेकित्वम्, ।

वोग्राह्य ( १ ) स्तेनधूमाभाववद्ध्रदादिवृत्तित्वाभावस्य तादृश वृत्तित्वजलत्वोभयाभावस्य चवह्न्यादिहेतौसत्वेऽपि नातिव्याप्त्यवकाश, स्तादृशवृत्तित्वसामान्याभावस्य वह्न्यादाव भावात्, वृत्तिताचहेतुताघटकसम्बन्धावच्छिन्नाग्राह्या ( २ ) तेनवह्न्यभाववति स्वावयवेधूमस्यसत्त्वेऽपि वह्निमान्धूमादित्यादौनाव्याप्तिः, संयोगेनस्वावयवेस्तस्याभावात्, साध्याभावश्चयेनरूपेण येनसम्बन्धेनसाध्यता तद्रूपावच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगिताकोबोध्य ( ३ ) स्तेनवह्निमान्धूमादित्यादौ तत्तद्वह्नि

---

( १ ) ( टि० ) अयंभाव: तत्तदवच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वसहित साध्यतावच्छेदकसम्बन्धावच्छिन्नत्व निष्ठावच्छेदकता निरूपितसाध्यतावच्छेदकधर्म्मावच्छिन्नत्व निष्ठावच्छेदकतानिरूपित प्रतियोगितात्वनिष्ठावच्छेदकता निरूपित प्रतियोगितानिष्ठावच्छेदकता निरूपिताभावत्व निष्ठावच्छेदकता निरूपिताभावनिष्ठावच्छेदकता निरूपिताश्रयनिष्ठावच्छेदकता निरूपितवृत्तितात्वनिष्ठावच्छेदकता निरूपित प्रतियोगिताकाभाववत्वं व्याप्तिरिति, ॥

( २ ) ( टि० ) हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्व प्रतियोगिकस्वरूपसम्बन्धावच्छिन्न प्रतियोगिताकवृत्तित्वाभावस्य, हेतुतावच्छेदकसम्बन्धभिन्नहेतु प्रतियोगिकसम्बन्धानवच्छिन्नवृत्तित्वाभावस्यवा, विवक्षितत्वात्तेनसत्तावान् जातेरित्यत्रनाव्याप्तिः ॥

( ३ ) ( टि० ) साध्यतावच्छेदतात्वावच्छिन्न प्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्ति साध्यतानिरूपितसंसर्गतावच्छेदकतात्वां वच्छिन्नप्रतियोगिताकपर्य्याप्त्य नुयोगि

व्यक्तित्वावच्छिन्नाभावस्य वह्निघटोभयत्वावच्छिन्नाभावस्य समवायेनवह्न्यभावस्यच धूमवतिपर्वतादौसत्त्वेऽपिनक्षति, निरुक्ताभावद्वयप्रतियोगितायां वह्नित्वावच्छिन्नत्वस्य, समवायेन वह्न्यभावप्रतियोगितायांच संयोगावच्छिन्नत्वस्यच, विरहेणतेषांलक्षणाघटकत्वात्, अत्रसाध्यपदानुपादानेऽभाववतिपर्वतादौ धूमादेस्सत्त्वेनासम्भवप्रसङ्गात्, अभावपदानुपादानेवह्न्यभाववान् वह्न्यभावाभावत्वादित्यादौ साध्यनिष्ठप्रतियोगितानिरूपकवह्न्यभावाभावत्वाख्यानुयोगित्वाधिकरणवह्न्यभावाभावेहेतोस्सत्त्वेनाव्याप्त्यापत्तेः, तदुपादानेच निरुक्तानुयोगित्वे साध्याभावत्वविरहेणाव्याप्तिविरहात्, ननुविशिष्टसत्ताभाववान् गुणत्वादित्यादौ साध्याभावस्यविशिष्टसत्त्वस्य सत्तानतिरिक्ततया तदधिकरणगुणवृत्तित्वस्य गुणत्वहेतौसत्त्वेनाव्याप्तेः, नच निरुक्तसाध्याभावस्य द्रव्यत्वाधिकरणतास्वरूपत्वस्वीकारात, स्वीकाराद्वा अभावत्वप्रतीतेः प्रमात्वानुरोधेनतस्यातिरिक्तत्वस्य, तथाचनतत्राव्याप्तिरितिवाच्यमाकाशाभावस्य कालिकसम्बन्धावच्छिन्न प्रतियोगिताकाभाववानात्मत्वा दित्यादावाका

---

तावच्छेदकरूपवृत्तिप्रतियोगिताकाभावः साध्याभावपदार्थः, प्रथमवृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, द्वितीयवृत्तित्वञ्च स्वनिरूपितसंसर्गतावच्छेदकता त्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तेनविषयितया वह्निमत्त्वासीयवह्निमान् तज्ज्ञानत्वादित्यत्रवह्निमत्त्वानसीयाभावमादाय, संयोगत्वसमवायत्वान्यतरत्वसम्बन्धेनवह्निमान् धूमादित्यत्र समवायेन वह्न्यभावमादाय, नाव्याप्तिः ॥

शाभावभिन्नमात्मत्वादित्यादौवासाध्याभावस्याकाशाभावात्मकस्याधिकरणआत्मनिहेतोर्वृत्तेरव्याप्तिरितिचेन्न साध्यतावच्छेदकावच्छिन्न प्रतियोगिताकाभावत्वावच्छिन्नाधिकरणत्वस्य विवक्षितत्वात्, विशिष्टसत्ताभावाभावत्वावच्छिन्नाद्यधिकरणे द्रव्यादौहेतोरसत्त्वेनाव्याप्तिविरहात्, नचद्रव्यत्ववान् महाकालत्वादित्यादौ कालिकेनसाध्याभाववतिमहाकाले हेतोस्सत्त्वेनाव्याप्तिः, (१) एवंविषयित्वव्यभिचारित्वादिसम्बन्धेनसत्ताभाववतिज्ञाने रूपादौगुणत्वस्यसत्त्वेन सत्तावान्गुणत्वादित्यादौ चाव्याप्तेरितिवाच्यम भावीयविशेषणता विशेषसम्बन्धेन साध्याभाववत्त्वस्यविवक्षितत्वात, यदिचघटत्वाभाववान् गुणत्वात् घटभिन्नंवागुणत्वादित्यादौ घटत्वात्मकसाध्याभावस्याधिकरणाप्रसिद्ध्याऽव्याप्तिरित्युच्यते, तदेतन्मतेऽभावाभावस्यातिरिक्तत्वाभ्युपगमा, दन्यथाभावत्वेनाभावत्वेन विभजनासङ्गतेः, (२) अथवासाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यप्रकारताशालिबुद्धित्वावच्छिन्न प्रतिवध्यतानिरूपितप्रतिवन्धकतावच्छेदक साध्याभावप्रकारत्वा वच्छेदकसम्बन्धेन साध्याभाववत्त्वस्यविवक्षितत्वात्, निरुक्तस्थलेतथाविधसमवायसम्बन्धेन घटत्वात्मकसाध्याभावस्य घटएवसत्त्वेनाव्याप्तिवि

(१) (टि० ) तद्घटाभाववान् तद्घटासमानपटत्वादित्यत्रलक्षणसमन्वयसम्भवान्नासम्भवः ॥

(२) (टि० ) केचित्तुसाध्यतावच्छेदक सम्बन्धावच्छिन्न प्रतियोगिताक साध्याभाववृत्तिसाध्यतावच्छेद व्यापकप्रतियोगितावच्छेदकसम्बन्धेन साध्याभाववत्त्वस्य विवक्षितत्वान्नोक्तदोषः, व्यापकताच निरूपकतासम्बन्धेन, त्याहुः ॥

रहादिति, एतेनकपिसंयोग्येतत्त्वादित्यादौ मूलावच्छेदेन कपिसंयोगाभाववतिवृक्षेहेतोस्सत्त्वेनाव्याप्तिरितिनिरस्तम्, निरुक्तविरोधिता घटकानिरवच्छिन्नस्वरूपेण साध्याभाववतिगुणादौहेतोरसत्त्वेनाव्याप्तिविरहात्, नचकपिसंयोगाभाववान् गुणत्वादित्यादौ तथाविधनिरवच्छिन्नसमवायेन साध्याभाववतोऽप्रसिद्धेरव्याप्तिरितिवाच्यं तस्यकेवलान्वयिसाध्यकसद्धेतावन्तर्भावात्, नचकेवलान्वयिसाध्यकेकागतिरितिवाच्यमेतन्मतेकेवलान्वयिसाध्यकानुमितेरनङ्गीकारात्, दङ्गीकाराच्च गुरुधर्मस्यवृत्त्यनियामकसम्बन्धस्यच प्रतियोगितावच्छेदकतायाः, तेनप्रमेयवह्निमान् धूमात्, घ्राणग्राह्यगुणवानरविन्दत्वादित्यादौ, धनीचैत्रत्वादित्यादौ, नाव्याप्तिरिति, केवलान्वयिसाध्यकानुमितिस्वीकारेतु व्याप्तिभ्रमादेवतत्सम्भवात्, नचाभ्रान्तस्य कथमनुमितिरितिवाच्यम भ्रान्तस्यपरमेश्वरस्य पदार्थमात्रस्य, परोक्षस्यैवसत्त्वेन तदनभ्युपगमात्, नचकेवलान्वयिनोव्याप्यत्वव्यवहारानुपपत्तिरितिवाच्यं केवलान्वयिहेतोर्व्यापकत्वात् न्यूनवृत्तिधर्मस्यैव व्याप्यत्वानुभवात् तत्रव्याप्यत्वव्यवहारानभ्युपगमात्, नचव्यभिचारिलिङ्गकानुमितिरपिस्यादितिवाच्यं व्यभिचारज्ञानाभावदशायामनुमितेस्तत्रापिस्वीकारात्, इतिप्राचीनमतनिगर्वः, । अत्रेदंचिन्त्यते, घटत्वस्यवाच्यत्वापेक्षया न्यूनवृत्तितयातत्रवाच्यत्व व्याप्यत्वव्यवहारस्य सर्वजनीनस्यानुपपत्तं, वाच्यत्वत्वावच्छिन्नाभावस्याप्रसिद्धत्वात्, यदिचसाध्यतावच्छेदकसम्बन्धावच्छिन्न स्वावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वसम्बन्धावच्छिन्न प्रतियोगिताकसाध्यतावच्छेदकाभाववत्त्वस्य साध्यतावच्छेदकावच्छिन्न व्याप्यत्वव्यवहारनियामक

त्वमित्युच्यते, तदानकोऽपिदोषः पदमादधातीत्यभिनवः पन्थाः, ॥ अथद्रव्यंगुणकर्म्मान्यत्व विशिष्टसत्त्वादित्यादौ द्रव्यत्वाभाववति गुणेसत्त्वत्यसत्त्वेन विशिष्टसत्त्वेतदभावस्यासत्वात्, विशेष्यवृत्तिप्रतियोगिकाभावस्य विशिष्टानुयोगिकत्वानभ्युपगमा, दव्याप्तिरितिचेन्न साध्याभाववदवृत्ति स्वावच्छिन्नाधिकरणताकहेतुता वच्छेदकवत्त्वस्यव्याप्तिपदार्थत्वात्, तथाच साध्याभाववतिगुणादौ विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वस्यासत्त्वान्नाव्याप्तिरिति, एतेनसत्तावान् जातेरित्यादौ सत्ताभाववतिसामान्यादौ समवायेनवृत्तेरप्रसिद्धत्वेपिनक्षतिः, साध्याभाववतिवृत्तित्वस्य स्वरूपसम्बन्धेनविवक्षितत्वात्, सत्ताभाववतिसामान्यादौ स्वरूपेणजात्यधिकरणत्वस्यावृत्तित्वेनाव्याप्त्यसम्भवादितिदिक्, ॥ साध्यवद्भिन्नवृत्तिसाध्याभाववदवृत्तित्वंवाव्याप्तिः ॥ कपिसंयोग्येतद्वृक्षत्वादित्यादिसंग्रहाय साध्यवद्भिन्नवृत्तीति,साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकविशिष्ट साध्यवत्त्वावच्छिन्नभेदवद्वृत्तित्वमर्थ, स्तेनसमवायेनवह्निमद्वृ त्त्यवयवभिन्नत्वस्य महानसीयवह्निमद्भिन्नत्वस्य पर्वतादौसत्त्वेपि नाव्याप्तिरिति, साध्यवद्भिन्नवृत्तिसत्ता द्रव्यत्वाधिकरणपर्वतादौधूमस्य सत्त्वेनासम्भवापत्तेरतः साध्याभावति, नचकपिसंयोगवद्भिन्नगुणादिवृत्ति कपिसंयोगाभाववतिवृक्षेहेतोस्सत्त्वेनाव्याप्तितादवस्थ्यमितिवाच्यम धिकरणभेदेनाभावानांभिन्नत्वात्, गुणवृत्तिकपिसंयोगाभावस्य वृक्षादावभावात् नचैवंसाध्यपदस्यानर्थक्यप्रसङ्गः वह्निमद्भिन्नहृदादिवृत्तिघटाभावस्य हृदादावेवसत्त्वेनासंभवा नवकाशादिति वाच्यम् साध्यीयत्वंनैवाभावस्यप्रवेशो, नत्वभावत्वेनापीति ॥

यद्वास्वप्रतियोगितावच्छेदकसम्बन्धेन साध्यवद्भिन्नवृत्तिसा ध्यतावच्छेदकसम्बन्धावच्छिन्न प्रतियोगिताकाभावप्रवेशार्थ कमेवसाध्यपद, मन्यथासमवायेन बह्यभाववतिपर्वतेधूमस्य वृत्तित्वादव्याप्त्यापत्तेरिति, यदिचलाघवेनाधिकरणभेदेनाभा वभेदानभ्युपगमात् कपिसंयोग्येतत्त्वादित्यादावव्याप्तिरित्युच्य तेतदाभेदस्य व्याप्यवृत्तितया साध्यवत्प्रतियोगिकान्योन्याभावा सामानाधिकरण्यस्यव्याप्तित्वात्, कपिसंयोगवद्भेदस्य वृक्षेबाधा दव्याप्तिरिति, नचवह्निमान्धूमादित्यादौ, गन्धवान्पृथिवी त्वादित्यादौच, साध्यवत्पर्वतान्योन्याभावस्यमहानसे, गन्धवत्स रोजान्योन्याभावस्यघटे, सत्त्वेनाव्याप्तिरितिवाच्यं साध्यताव च्छेदकविशिष्टसाध्यवत्वावच्छिन्न प्रतियोगिताकान्योन्याभावा धिकरण निरूपितवृत्तित्वाभावस्य निष्कृष्टलक्षणार्थत्वात्, सा ध्यवत्त्वञ्चात्रसाध्यता वच्छेदकसम्बन्धेनबोध्य, मतोनोक्ताव्या प्त्यवकाश इति ॥ अथवा साध्यतावच्छेदकसम्बन्धावच्छि न्नसाध्यता वच्छेदकावच्छिन्नप्रतियोगिताकाभाववत्सकलनि ष्ठाभावप्रतियोगित्वंव्याप्तिः ॥ साध्याभाववतिसाकल्यानुपादा ने धूमाभाववद्धृदनिष्ठाभावप्रतियोगित्वस्य वह्नौसत्वेनव्यभिचा रिण्यतिव्याप्तिरतस्तदुपादानं, तस्यव्यापकत्वमर्थ, स्तथाच धूमाभाववत्ययोगोलकेवह्न्यभावस्या सत्त्वेनसाध्याभाव व्यापक त्वविरहान्नातिव्याप्त्यवकाशः, समवायेनवह्न्यभावं तत्तद्वह्नि व्यक्तित्वावच्छिन्नाभावश्चा दायाव्याप्तिवारणाय साध्यताव च्छेदकसम्बन्धधर्म्मयोरवच्छिन्नत्वस्य प्रतियोगितायांनिवेशः, नचकपिसंयोग्येतद्वृक्षत्वादित्यादाव व्याप्यवृत्तिसाध्यकव्याप्य वृत्तिहेतावव्याप्तिः कपिसंयोगाभाववतिवृक्षे एतद्वृक्षत्वाभाव

स्यासत्वा, देवमव्याप्यवृत्तिहेतुकव्यधिचा (१) रिण्ये तद्वृ सत्वाभाववति वृक्षान्तरेमूलावच्छेदेन कपिसंयोगाभावस्य स त्वादतिव्याप्ति, रितिचेन्न साध्याभावेहेत्वभावेचप्रतियोगिवैय धिकरण्यस्यविवक्षितत्वात्, साध्याभावेप्रतियोगिवैयधिकरण्य श्च साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नवै यधिकरण्यरूपंबोध्यम्, तेनसम्बन्धसामान्येनधूमवह्निवे प्रलये वह्न्यभावस्य, विशिष्टसत्ताभावप्रतियोगिसत्तानधिकरणेजात्या दौ जातिसामान्याभावस्य, सत्त्वेऽपिधूमवान् वह्नेर्विशिष्टस त्तावान् जातेरित्यादौनातिव्याप्तिः संयोगेनधूमवह्निमत्वस्या योगोलके, विशिष्टसत्तात्वावच्छिन्नाधिकरणभिन्नत्वस्यगुणादौ, सत्त्वेनतत्रहेत्वभावस्याविद्यमानत्वात्, हेत्वभावप्रतियोगिवैयधि करण्यञ्च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेद कावच्छिन्नवैयधिकरण्यं, तेनायमात्माज्ञानादित्यादौ, द्रव्यंवि शिष्टसत्वादित्यादौ, विषयतासम्बन्धेन ज्ञानस्यसर्वत्रसत्त्वेन त दनधिकरणत्वाप्रसिद्धावपि, द्रव्यत्वाभाववतिगुणादौ विशिष्ट सत्ताभावप्रतियोगिता श्रयसत्ताधिकरणभिन्नत्वस्यासत्वेऽपि च, नाव्याप्त्यवकाशः समवायेनज्ञानाधिकरणभिन्नत्वस्य घटा दौसाध्याभाववतिसत्वात्, एवंविशिष्टसत्तात्वावच्छिन्नानधिक रणत्वस्य घटाभाववतिगुणादौसत्त्वात्, हेत्वभावप्रतियोगित्वञ्च हेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकधर्म्मेणावच्छिन्नंग्राह्यं, तेनात्मभिन्नंद्रव्यत्वादित्यादौ, वात्मनिकालिकेनद्रव्यत्वाभावस्य, द्रव्यंसत्त्वादित्यादौ द्रव्यत्वाभाववत्सकलनिष्ठ विशिष्टसत्ताभा वप्रतियोगित्वस्यसत्त्वहेतौ सत्त्वेऽपिनातिव्याप्तिः समवायेनद्र

(१) (टि॰) पृथिवीकपिसंयोगादित्यादावित्यर्थः, ॥

व्यत्वाभावप्रतियोगित्वावच्छेदकसमवायेन द्रव्यत्वानधिकरणत्व स्यात्मन्यसत्वात्, विशिष्टसत्ताभावप्रतियोगितायाः हेतुतावच्छेदकसत्तात्वमात्रानवच्छिन्नत्वात्, यदिचलाघवात् हेत्वभावप्रतियोगितैयधिकरण्यं हेतुतावच्छेदकावच्छिन्नाधिकरणभिन्नवृत्तित्वं विवक्षणीयं, प्रतितयोगितायां हेतुतावच्छेदकावच्छिन्नत्वं नदेयमित्युच्यते, तदाधूमानिष्ठस्यवह्न्यभाववत्सकलनिष्ठधूमत्वावच्छिन्नानधिकरण वृत्त्यभावप्रतियोगित्वस्य रासभादिसाधारणत्वात्, धूमोवह्निव्याप्यइतिवत् रासभोवह्निव्याप्यइति व्यवहारापत्तिः स्यात्, प्रतियोगितायांहेतुतावच्छेदकावच्छिन्नत्वनिवेशेचधूमत्वावच्छिन्न प्रतियोगितावत्त्वस्य रासभादावभावेनापत्तिविरहादिति, अत्रसाध्यतावच्छेदकसम्बन्धावच्छिन्न प्रतियोगितावच्छेदकावच्छिन्ना नधिकरणवृत्तित्वविशिष्टसाध्याभावत्वावच्छिन्नाधिकरण निरूपितवृत्तितावदभाव प्रतियोगितानवच्छेदकं प्रतियोगितावच्छेदकसम्बन्धावच्छिन्न प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तित्व विशिष्टहेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्न प्रतियोगिताकाभावत्वावच्छिन्नाधिकरणतात्वं तद्धर्मवत्त्वमितिनिष्कर्षः, तेनगगनावृत्तिधर्म्मवान् गगनत्वादित्यादौ साध्याभाववत्सकलाप्रसिद्धावपिनक्षति, नवाऽधिकरणभेदेऽप्यभावस्याभिन्नतया कपिसंयोग्येतत्त्वादित्यादावव्याप्तिः, कपिसंयोगानधिकरणवृत्तित्व विशिष्टकपिसंयोगाभावत्वा वच्छिन्नाधिकरणत्वस्य वृक्षादावसत्त्वादितिदिक् ॥

साध्यवन्यावृत्तित्वंवाव्याप्तिः, साध्यपदस्यसाध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकविशिष्टसाध्यवत्त्वावच्छिन्न प्रतियोगितानिरूपकोऽर्थ, स्तथाचसाध्यतावच्छेदकसम्बन्धावच्छि

न्नसाध्यतावच्छेदकविशिष्ट साध्यवत्त्वावच्छिन्नप्रतियोगिताक भेदवन्निरूपितवृत्तित्व सामान्याभाववत्त्वंपर्य्यवसितोऽर्थ, स्ते नसमवायेनवह्निमद्भिन्नत्वस्य महानसीयवह्निमद्भेदादेश्च पर्व तादौसत्त्वेऽपिवह्निमान् धूमादित्यादौनाव्याप्तिः, नवाधूमव द्भेदवद्भूदादिवृत्तित्वा भावादिकमादायधूमवान् वह्नेरित्या दावतिव्याप्तिः, गुरुधर्म्मस्यावच्छेदकत्वस्वीकारा तद्द्रव्यंपृथि वीत्वादित्यादौ द्रव्यत्वापेक्षयाद्रव्यत्वत्वविशिष्टद्रव्यत्ववत्त्वस्य गु रुतयाऽनवच्छेदकत्वाद व्याप्तिशङ्कायाअनवकाशइति, निरु क्तसाध्यवद्भेदवत्त्वञ्चस्वरूपसम्बन्धेनबोध्यम्, तेननवह्नि मान् धूमातद्रव्यं महाकालत्वादित्यादौवा कालिकसम्बधेनसाध्यवद्भे दवतिपर्वतेमहाकालेचहेतोः सत्त्वेनाव्याप्तिः, स्वरूपसम्बन्धेन वह्न्यादिमद्भेदस्य पर्वतादावसत्त्वात्, अथयदिकेवलान्वयिसा ध्यकानुमितिरप्यानुभाविकी, केवलान्वयिहेतौचव्याप्यत्वव्यव हारो, घटत्वादौवाच्यत्वादिव्याप्यत्वव्यवहारो,ऽप्य, नुभवसि द्ध, स्तदा*उच्यते प्रतियोग्यसमानाधिकरणयद्रूपविशिष्ट समा नाधिकरणात्यन्ताभाव प्रतियोगितानवच्छेदकोयो धर्म्मस्तद्ध र्म्मावच्छिन्न सामानाधिकरण्यं तद्रूपविशिष्टनिष्ठं, तद्धर्म्माव च्छिन्नसामानाधिकरण्यवतितद्रूपंवा, तद्रूपावच्छिन्नस्य तद्ध र्म्मावच्छिन्ननिरूपितव्याप्तिः, तद्रूपावच्छिन्नलिङ्गकतद्धर्म्माव च्छिन्न विधेयताकानुमितित्वावच्छिन्नजन्यता निरूपितविषयित्व सम्बन्धावच्छि[illegible]नकतावच्छेदकम्, अवच्छेदकान्तंलक्ष्यम्,सा मानाधिकरण्यान्तंतद्रूपान्तंवालक्षणम्, लक्षणेतद्रूपविशिष्टनिष्ठ त्वस्या निवेशेधूमगतवह्निव्याप्यत्वस्य रासभादावतिप्रसङ्गःस्या त्,धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वा

वच्छिन्नसामानाधिकरण्यस्य रासभादावक्षतत्वात्, एवंतादृश रासभवान् पर्वतइतिज्ञानाद्वह्न्यनुमितिप्रसङ्गश्चस्यात्, तन्निवेशेचधूमनिष्ठनिरुक्तसामानाधिकरण्यस्य रासभादावभावान्नापत्त्यवकाशइति, अत्रप्रथमकल्पेप्रथमतोमहानसान्तर्भावेण गृहीतवह्निसामानाधिकरण्यस्य पुरुषस्यपर्वतेऽविच्छिन्नधूमरेखा दर्शनानन्तरजातानुमित्यनुपपत्ति, स्तत्रपरामर्षस्यासम्भवा, त्तथाहि स्मृतसामानाधिकरण्यस्यपर्वतीयधूमावृत्तित्त्वात्, पर्वतीयधूमनिष्ठवह्निसामानाधिकरण्यस्य पूर्वाननुभूतस्यस्मरणासम्भवात, द्वितीयकल्पेचनायंदोषः धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वस्यव्याप्तितयातस्य पर्वतीयधूमेसत्त्वेनपरामर्षसम्भवात्, परामर्षश्चधूमव्यापकवह्निसमानाधिकरणवृत्तिमद्धूमवान् पर्वतइत्याकारक, स्तस्यप्रमात्वात्, सामान्यलक्षणास्वीकारपक्षे पूर्वकल्पेपिनोक्तानुपपत्ति,स्तथाहिधूमत्वेननिखिलधूमस्य वह्न्यधिकरणवृत्तितात्वेननिखिलधूमनिष्ठाखिलवह्न्यधिकरणवृत्तित्वस्यज्ञानस्य प्रथमतोऽपिसम्भवेनपर्वतीयधूमनिष्ठ वह्निसामानाधिकरण्यस्यापिस्मरणसंभवान्न परामर्षानुमित्यनुपपत्तिरिति, परन्तुविशिष्टसत्त्वनिष्ठ विशिष्टसत्त्वव्यापकद्रव्यत्व सामानाधिकरण्याश्रयवान् गुणइतिपरामर्षाद्गुणाद्रव्यमित्यनुमितिः प्रमास्यात् प्रमापरामर्षजन्यत्वादितिदोषः प्रथमकल्पेवोध्यइति, लक्ष्येतद्रूपावच्छिन्नलिङ्गकेत्यत्रतदाश्रयलिङ्गताकेत्युक्तौ द्रव्यत्वादिरूपेणधूमेवह्निव्याप्यत्वप्रसङ्गः स्यात्, तद्धर्मावच्छिन्नविधेयकंत्यनुक्तौ धूमसामान्येतद्वह्निव्याप्यत्वप्रसङ्गो, ऽतउभयत्रावच्छिन्नत्वोपादानं, केचित्तुइतरभेदानुमितौभागासिद्धिवारणाय तद्धर्मावच्छिन्नलिङ्गकत्वतद्धर्मावच्छिन्नविधेयकत्वयोरुपादानमितिप्राहुः ॥ लक्षणेयप्र

पविशिष्टत्यनुक्तार्थवदंद्रव्यं गुणकर्म्मान्यत्वेसतिसत्त्वादित्यादौ स त्ताद्यधिकरणगुणादिनिष्ठात्यन्ता भावप्रतियोगित्वस्य साध्येद्र व्यत्वेसत्त्वादव्याप्ति, एतदुक्तौतुगुणकर्म्मान्यत्वविशिष्टसत्तात्वा वच्छिन्नाधिकरणत्वस्य गुणादावभावान्नाव्याप्तिरिति, कपि संयोग्येतत्त्वादितिसंग्रहाया समानाधिकरणान्तं, प्रतियोगिता वच्छेदकावच्छिन्न सामानाधिकरण्याभावस्तदर्थ, एतेनविशिष्ट सत्तावान् जातेरित्यादौविशिष्टसत्ताभावे स्वप्रतियोगिताश्रयस त्तासामानाधिकरण्यस्य सत्त्वेऽपिनक्षतिः, विशिष्टसत्तात्वावच्छि न्नसामानाधिकरण्याभावस्याक्षतत्वात्, नचकपिसंयोगीसत्त्वादि त्यादौ कपिसंयोगाभावस्य कपिसंयोगसमानाधिकरणतया ल क्षणाघटकत्वात् घटाद्यभावप्रतियोगितानवच्छेदकत्वस्य कपिसं योगत्वे सत्त्वेनातिव्याप्तिरितिवाच्यं प्रतियोगितावच्छेदका वच्छिन्नानधिकरणत्वंतदर्थ, एतस्यहेत्वधिकरणेऽन्वयः, प्रति योगितावच्छेदकावच्छिन्नानधिकरण हेतुतावच्छेदकावच्छिन्ना धिकरणवृत्त्यभावप्रतियोगिता ऽनवच्छेदकसाध्यतावच्छेदकाव च्छिन्न सामानाधिकरण्यमितिनिष्कर्षः, अथसाध्यतावच्छेद केनिरुक्त प्रतियोगितानवच्छेदकत्वमनिवेश्यसाध्ये तादृशाभा वाप्रतियोगित्वस्यैव लाघवान्निवेशोऽस्त्वितिचेन्न वह्निमान्धूमा दित्यादौ महानसीयवह्न्यादिनिष्ठतद्व्यक्तित्वा वच्छिन्नाभावस्य धूमसमानाधिकरणस्य प्रतियोगितायाः सकलवह्नौसत्त्वेनाव्या प्त्यापत्तेः, नचधूमसमानाधिकरणस्य पर्वतेमहानसीयोवह्निर्ना स्तीति प्रतीतिसिद्धाभावस्य प्रतियोगितावच्छेदकमेव वह्नित्व मित्यव्याप्तितादवस्थ्यमितिवाच्यं केवलवह्नित्वे महानसीयव ह्न्यभावप्रतियोगितावच्छेदकत्वानभ्युपगमाद, न्यथाधूमवतिव

ह्निर्नास्तीति प्रत्ययप्रसङ्गा, दितिताद्दशाभाव प्रतियोगितावच्छे दकंवह्नित्व महानसीयत्वोभयमेव, उभयभेदस्यवह्नित्वेसत्त्वान्ना व्याप्तिरिति, ॥ साध्यतावच्छेदकतादितरोभयावच्छेद्यभिन्नत्वस्य प्रतियोगितायां विवक्षितत्वान्नाव्याप्तिरितिकेचित्, वस्तुतस्तु प्रतियोगिव्यधिकरण हेतुसमानाधिकरणाभावप्रतियोगित्वं य द्धर्म्ममात्रानवच्छिन्नं तद्धर्म्मावच्छिन्नसामाधिकरण्यस्य विव क्षितत्वात्, महानसीयवह्न्यभावप्रतियोगिताया वह्नित्वमात्रान वच्छिन्नत्वाल्लक्षणसमन्वयः, नचसमवायेनवह्न्यभावप्रतियोगि त्वस्य वह्नित्वमात्रावच्छिन्नत्वादव्याप्तिरितिवाच्यं सम्बन्धविशे षेण प्रतियोगिवैयधिकरण्यस्याविवक्षितत्वात्, समवायेनवह्न्य भावस्य लक्षणघटकत्वविरहेणाव्याप्तिविरहात्, ननुरूपवान् घ टमहाकालान्यतरत्वादौ कालिकसम्बंधेनरूपादेर्व्यभिचार नि रूपकाधिकरणेमहाकालेऽपिसत्त्वेन रूपाद्यभावस्यलक्षणाघटक त्वात्, तद्घटासमानकालीन व्यक्त्यभावप्रतियोगितायांच रू पत्वानवच्छेद्यत्वादतिव्याप्तिरतः प्रतियोगितावच्छेदकसम्बंधेन प्रतियोगिवैयधिकरण्यस्या वश्यंविवक्षणीयतयोक्ताव्याप्तेस्तादव स्थ्यमितिचेन्न प्रतियोगितावच्छेदकसम्बंधेन प्रतियोगिव्यधि करणाभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्न त्वस्यविवक्षितत्वात्, यद्वासाध्यतावच्छेदकसम्बन्धेन प्रतियोगि वैयधिकरण्यस्य विवक्षितत्वात्, समवायेनवह्न्यभावस्य लक्षणा घटकत्वेनाव्याप्तिविरहात्, हेत्वधिकरणत्वमपिहेतुतावच्छेदक सम्बन्धेनबोध्यम्, तेनधूमवतिधूमावयवेसंयोगेन वह्न्यभावस्य सत्त्वेऽपिनाव्याप्तिरिति, अथवह्निसमानाधिकरणघटाद्यभाव प्रतियोगितायाः धूमत्वाद्यनवच्छेद्यत्वाद्व्यभिचारिण्यतिव्याप्ति

रितिचेन्न तथाविधप्रतियोगितासामान्ये यद्धर्म्मानवच्छिन्नत्व स्याविवक्षितत्वात्, निरुक्तप्रतियोगित्वसामान्यान्तर्गतायां धूमाद्यभावप्रतियोगितायां धूमत्वाद्यनवच्छेद्यत्वविरहेणातिव्याप्तिविरहात् नचमहानसीयवह्निवृत्तित्व विशिष्टजातिमान्नास्तीत्यभावप्रतियोगितायां तथाविधायां वह्नित्वजात्यवच्छिन्नत्वादव्याप्तिरितिवाच्यं द्रव्यत्वाद्यवच्छिन्नत्वस्यापि तत्रसत्त्वेन वह्नित्वमात्रानवच्छिन्नत्वस्य तत्राक्षतत्वादिति, नचतथापिवह्नित्वप्रतियोगिकसमवायेन महानसीयवह्निवृत्तित्व विशिष्ट जात्यवच्छिन्नाभाव प्रतियोगितायांवह्नित्वा वच्छिन्नत्वस्य सत्त्वादव्याप्तितादवस्थ्यमितिवाच्यं विशेषरूपेणसंसर्गत्वस्यानभ्युपगमाद, भ्युपगमेवानिरवच्छिन्न साध्यतावच्छेदकतास्थलीयलक्षणघटकप्रतियोगितायां निरवच्छिन्नावच्छेदकतानिरूपितत्वस्य विवक्षितत्वादव्याप्तिविरहात्, नचविशिष्टसाध्यतावच्छेदकस्थलीयलक्षणेदण्डिमान् दण्डिसंयोगादित्यादौनिखिलदण्डव्यक्तीनां चालनीन्यायेन तथाविधप्रतियोगितावच्छेदकतया तथाविधप्रतियोगितायां दण्डानवच्छेद्यत्व विरहादव्याप्तिरितिवाच्यं साध्यतावच्छेदकतावच्छेदकतदितरोभयावच्छेद्यावच्छेदकतानिरूपितभिन्नत्वस्य साध्यतावच्छेदकता वच्छेदकेतरावच्छेद्यावच्छेदकता निरूपितभिन्नत्वस्य (१) वा प्रतियोगिव्यधिकरणहेतुमन्निष्ठा भावप्रतियोगितायां विवक्षितत्वादव्याप्त्यभावादिति ॥ वस्तुतस्तुविशिष्टसाध्यतावच्छेदक

---

(१) टि० ) तेनतद्वह्निमान्नास्तीत्यभावमादाय नोक्त दोषः ।

स्थले प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिता सामान्यं यद्धर्म्ममात्रावच्छिन्नावच्छेदकत्वानिरूपितं तद्धर्म्मविशिष्टावच्छिन्नसामानाधिकरण्यस्य व्याप्तेर्विवक्षितत्वात्, तत्तद्दण्डवदभावप्रतियोगितायां दण्डत्वमात्रावच्छेद्यावच्छेदकत्वानिरूपितत्वस्य सत्त्वाल्लक्षणसमन्वयसम्भवात्, एतेन प्रमेयवद्वान्धूमात् रूपत्वन्यूनवृत्तिजातिमत्वान् रूपात् पृथिवीत्वादित्यादौ प्रत्येकनीलत्वावच्छिन्नाभावप्रतियोगितायां नीलत्वावच्छिन्नत्वसत्त्वेऽपि नाव्याप्त्यवकाशः, तथाविधप्रतियोगितायां तथाविधजातित्वावच्छिन्नावच्छेदकत्वानिरूपितत्वस्याक्षतत्वात्, ननु रूपवान्पृथिवीत्वादित्यादौ विषयित्वसंबन्धावच्छिन्नरूपत्वनिष्ठावच्छेदकताकरूपत्ववज्ज्ञानाभावस्यप्रतियोगितायां रूपत्वावच्छेद्यत्वादव्याप्तिरितिचेन्न साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठावच्छेकत्वानिरूपितत्वस्य विवक्षितत्वात्, निरुक्ताभावप्रतियोगितायां समवायसम्बन्धावच्छिन्नरूपत्वनिष्ठावच्छेदकतानिरूपितत्वस्यासत्वाल्लक्षणसमन्वयसंभवात्, अथप्रतियोगिवैयधिकरण्यस्य सामान्यतः प्रतियोगितावच्छेदकधर्म्मावच्छिन्नाधिकरणभिन्नार्थकत्वेऽसम्भवःप्रतियोगितावच्छेदकत्वस्य सर्वत्रसत्वात्, स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरण भिन्नार्थकत्वेस्वत्वस्याननुगतत्वेनैकोपादाने ऽन्यासङ्ग्रहेण व्यभिचारिण्यतिव्याप्त्यापत्तेः, उपादानप्रतियोगिसाध्यकसद्धेताव्याप्तेश्च, (१) स्वत्वस्यानुगतत्वे त्वसम्भवस्तदवस्थ एव सर्वेषांस्वपदार्थत्वा

(१) (टि०) लक्षणेस्वपदेन यदिधूमाभावोगृह्यतेतदा धूमवान् तद्वह्निमत्वादित्यत्राऽव्याप्तिः स्यादितिभावः ॥

दिंतिचेन्न हेत्वधिकरणवृत्तिभेदीयप्रतियोगितानिरूपिताधिक रणत्वनिष्ठावच्छेदकतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छि न्ननिरूपकतानिष्ठावच्छेदकता निरूपितावच्छेदकतानिष्ठावच्छेद कतानिरूपितधर्म्मनिष्ठावच्छेदक तानिरूपितावच्छेदकत्वनिष्ठाव च्छेदक तानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितनि रूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावदभावप्रतियोगितासामा न्यतस्यविवक्षितत्वात्, भेदश्चघटाद्यभावात्मकतद्व्यक्तिनिरूपित प्र तियोगितानिरूपितावच्छेदकतावद्धर्म्मावच्छिन्न निरूपकताका धिकरणतावान्नेत्याकारक प्रतीतिसाक्षिकोबोध्य,स्तथाचना प्रसि द्ध्यवकाशः, ननु गुणाभाववान् संयोगाभाववान् वाद्रव्यत्वादि त्यादौ गुणाभावाभावस्यकपिसंयोगात्मकत्वेन कपिसंयोगाभावा भावाभिन्नतया तन्निरूपित प्रतियोगितावच्छेदक कपिसंयोगाभा वत्वावच्छिन्नाधिकरणत्वस्यहेत्वधिकरणेसत्त्वेन तस्यलक्षणाघट कत्वा दभावान्तरमादायातिव्याप्तिः, यदिचघटाभावादीनामपि पूर्वक्षणादिवृत्तित्वविशिष्ट,स्वाभावाभावात्मकत्वेनतुल्ययुक्त्या लक्षणाघटकत्वादभावा प्रसिद्ध्याऽतिव्याप्तिवारणसम्भवादित्यु च्यते, तदास्वरूपसम्बन्धसाध्यकसद्धेतावसम्भवस्तुल्ययुक्त्या, यदितद्व्यक्तिनिरूपित प्रतियोगितावच्छेदकयत्किञ्चिद्धर्म्माव च्छिन्नाधिकरणन्नेति प्रतीतिसिद्धभेदोविवक्ष्यतेतदाकपिसंयो गाभाववानात्मत्वादित्यादौ कपिसंयोगात्मकगुणाभावाभावप्र तियोगितावच्छेदकीभूतगुणाभावत्वावच्छिन्नानधिकरणत्वस्यात् मनिसत्त्वेनसाध्याभावस्यलक्षणघटकत्वादव्याप्तिरितिचे, न्नैवम् यत्प्रतियोगितावच्छेदकम्मावच्छिन्नानधिकरणत्वं हेतुमतस्तत् प्रतियोगितासामान्यस्यनिष्कृष्टार्थत्वात्, तथाचहेत्वधिकरणवृत्ति

भेदीय प्रतियोगितानिरूपिताधिकरणतानिष्ठावच्छेदकतायाः १ परम्परयानिरूपिता वच्छेदकतावत्प्रतियोगितासामान्ये यद्धर्म्म मात्रावच्छिन्नत्वाभावस्तद्धर्म्मावच्छिन्न सामानाधिकरण्यमितिप र्य्यवसितम्, घटत्वावच्छिन्नप्रतियोगिता निरूपितावच्छेदकताव द्धर्म्मावच्छिन्नाधिकरणभेदस्य धूमादिमतिसत्त्वान्नासम्भवो, न वागुणाभावत्वावच्छिन्नप्रतियोगिता व्यक्तिनिरूपितावच्छेदक तावद्धर्म्मावच्छिन्नाधिकरणभेदस्य द्रव्यत्वादिमति सत्त्वेनाति व्याप्त्यवकाशइति, ननुकालोघटवान् महाकालत्वादित्यादौ का लिकसम्बंधेन वस्तुमात्रस्यमहाकाले सत्त्वेनहेत्वधिकरणवृत्ति निरुक्तभेदस्या प्रसिद्ध्याऽव्याप्तिरितिवाच्यं स्वावच्छेदकसम्बन्धे नयत्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तत्प्र तियोगितासामान्येय द्धर्म्मावच्छिन्नत्वयत्संबन्धावच्छिन्नत्वयो र्द्वयोर्व्यतिरेक स्तेनसम्बंधेनतद्धर्म्मावच्छिन्न सामानाधिकर ण्यस्यविवक्षितत्वात ,समवायेनघटाभावप्रातियोगितायास्तथावि धतयातत्रकालिकसम्बन्धावच्छिन्नत्वस्याभावेननिरुक्तोभयाभा वस्यतसत्वाल्लक्षणसमन्वयसम्भवात्,तेनसम्बन्धेनेत्यनुक्तौसंयोगे नरूपवान् पृथिवीत्वादित्यादावतिव्याप्तिः, संयोगेनरूपाभाव प्रतियोगितायालक्षणाघटकत्वेननिरुक्तप्रतियोगितासामान्येरूप त्वावच्छेद्यत्वघटितोभयाभावसत्वात्, तदुक्तौतुसंयोगेनरूपाधि

---

(१) (टि॰) तन्निरूपितनिरूपकता निष्ठावच्छेदकतानि रूपितावच्छेदकता निष्ठावच्छेदकता निरूपितधर्म्मनिष्ठाव च्छेदकता निरूपितावच्छेदकतानिष्ठावच्छेदकता निरूपित निरूपितत्वसम्बन्धा वच्छिन्नावच्छेदकता वत्प्रतियोगितात्व व्यापकइति सामान्यइत्यन्तार्थः ॥

करणत्वाप्रसिद्ध्यानातिव्याप्तिः, नचतत्रैवरूपेपृथिवीत्वव्यापक त्वस्यापत्तिरितिवाच्यं यद्धर्म्मेसाध्यतावच्छेदकसम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्वस्यप्रवेशात्, रूपस्यसंयोगेनावृत्तित्वात् व्यापकत्वलक्षणस्यतत्रासत्त्वात्, वृत्त्यनियामकसम्बन्धस्याभाव प्रतियोगितावच्छेदकत्वस्वीकाराच्च तत्संसर्गकव्यभिचारिण्यतिव्याप्ते रनवकाशो, नवातत्सम्बन्धेन धनादिसाध्यकसद्धेतावव्याप्त्यवकाश, स्तदनभ्युपगमेतुस्वावच्छेदकताघटकसम्बन्धेनयादृशप्रतियोगितावच्छेदकानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्येयद्धर्म्मावच्छिन्ना वच्छेदकताकत्वयत्सम्बन्धावच्छिन्नावच्छेदकताकत्वयोर्द्वयो र्व्यतिरेकस्तत्सम्बन्धेनतदवच्छिन्न सामानाधिकरण्यस्यविवक्षितत्वात्, अवच्छेदकतायांवृत्त्य नियामकसंबन्धावच्छिन्नत्वस्यसर्ववादिसिद्धतयोक्त दोषानवकाशात्, अन्यथाचैत्रो नपचतीत्यस्याप्रामाण्यापत्तेः तत्र पाकनिष्ठावच्छेदकतायामनुकूलत्वसंबन्धावच्छिन्न त्वस्यासत्वात्, केवलान्वयिसाध्यकेच समवायेन प्रमेयोनास्तीत्यादिप्रतीतिसिद्धाभावप्रतियोगितायां प्रमेयत्वावच्छिन्नत्वस्यापिप्रसिद्धिसंभवान्नोभया प्रसिद्ध्याऽव्याप्त्यवकाशः ॥

अथप्रतियोगित्वस्य प्रतियोगिस्वरूपतया प्रतियोगितावच्छेदकस्वरूपतयावा समवायेनवह्न्यभाव प्रतियोगित्वस्यसंयोगेनवह्न्यभावप्रतियोगित्वाभिन्नतया तदवच्छेदकसंयोगेन वह्नित्वावच्छिन्नाधिकरणत्वस्यपर्वतादौसत्वेन समवायेन वह्न्यभावप्रतियोगित्वस्यलक्षणाघटकत्वात् समवायेन वह्निमान्धूमादित्यादावतिव्याप्तिः, स्वावच्छेदकयत्किञ्चित्सम्बन्धेनेत्युक्तौ संयोगेन वह्न्यभावप्रतियोगित्वस्यापि लक्षणघटकतया संयोगेनवह्निमान्

धूमादिव्याद्यावव्याप्तिरितिचेन्न प्रतियोगिता न प्रतियोगिस्वरूपा, गुणेगुणस्य सामान्यादौसामान्यादेश्चासत्त्वेनगुणादिर्न्नगुणाभाव प्रतियोगितावानितिप्रत्ययप्रसङ्गात्, गुणेगुणाभावप्रतियोगित्व व्यवहारोनस्यात्, गगनस्यावृत्तितयातदात्मकप्रतियोगित्वस्या पितथात्वात् गगनंगगनाभावप्रतियोगितावदितिप्रतीतेरप्रमात्वा पत्तेः, नचप्रतियोगितात्वेन प्रतियोगित्वस्यतत्रसत्त्वादितिवाच्य मवृत्त्यात्मकेवृत्तित्वस्य कथमप्यसंभवात्, नहिशिल्पिशतैरपिनीलं रूपंपीतं, पिपीलिकाचाश्वो, भवति, नाप्यवच्छेदकस्वरूपासा, शब्दावच्छिन्नाभावप्रतियोगित्वं, जात्यवच्छिन्नाभाव प्रतियो गित्वं, चैकमितिव्यवहारानुपपत्तेः, शब्दस्यजातेश्चानेकत्वात्, घटपटोभयाभावप्रतियोगित्वस्य घटत्वपटत्वोभयात्मकतया घट त्वपटत्वोभयत्वैतत्त्रितयात्मकतयावा, तेषामेकत्रासत्त्वेन तादृशप्र तियोगित्वं घटपटोभयवृत्तीतिव्यवहारानुपपत्तेश्च, एवंमहानसी यवह्न्यभावप्रतियोगिता । एका,ऽनेकावा, एकाचेत् महानसीय त्ववह्नित्वोभयात्मकत्वानुपपत्ति, रेकव्यक्तेरुभयात्मकत्वस्यानुभवे नाविषयीकरणात्, नानाचेत् वह्नित्वात्मिकैका, महानसीय त्वात्मिकाऽपरा, तथा च वह्नित्वस्यपर्वतीयवह्न्यादौ महानसीय त्वस्यघटादौसत्वेन पर्वतीयवह्निर्घटादिश्च महानसीयवह्न्यभावप्र तियोगितावानित्यपिप्रत्ययः प्रमास्यात्, नचमहानसीयवह्न्यभा वप्रतियोगितात्वेनतादृशप्रतियोगित्वस्य तत्रानभ्युपगमादितिवा च्यंहन्तभोः वह्नित्वात्मकप्रतियोगित्वे प्रतियोगितात्वं नवर्त्तते, ऽभावनिरूपितत्वं वातत्रनवर्त्तत, इतिकिंप्रयुक्तं वह्नित्वात्मिकाप्र तियोगिता तत्रनास्तीत्युच्यते, किञ्चप्रतियोगितात्वंवह्नित्वमहा नसीयत्वत्वाद्यभिन्न,मतिरिक्तंवा, अभिन्नश्चेदुक्तदोषानुद्धारः,

अतिरिक्तश्चेत् प्रतियोगिताऽतिरिक्तैवेतिसिद्धान्त, स्तथा च मोक्तदोषाणामवकाशः, संबन्धत्वादिकमप्यतिरिक्त पदार्थ स्ते ननान्योन्याश्रयइतिध्येयम् ।

केचित्तु साध्यतावच्छेदकसंबंधावच्छिन्नसाध्यताव च्छेदकावच्छिन्नाधिकरणत्वी यस्वरूपसंबन्धेन यादृशप्रतियोगि तावच्छेदकावच्छिन्नाधिकरणत्व सामान्याभाववत्त्वं हेतुमतस्तत्प्र तियोगितासामान्येयद्धर्म्ममात्रावच्छिन्नत्वाभाव, स्तद्धर्म्मावच्छि न्न सामानाधिकरण्यस्य विवक्षितत्वा, न्नकालोघटवान्महाका लत्वादित्यादावव्याप्तिः कालिकसंबन्धावच्छिन्न घटत्वावच्छि न्नाधिकरणत्वीयस्वरूपेण पटत्वावच्छिन्नाधिकरणत्वाभावस्य म हाकालेसत्त्वेन पटाभावप्रतियोगिताया लक्षणघटकत्वादित्याहु, स्तच्चिन्त्यम् । यत्तुमहाकालान्यत्वविशिष्टघटाभावप्रतियोगिता या लक्षणघटकतयासहजत एवकालोघटवान् महाकालत्वादि त्यादावव्याप्तिवारणसम्भवादिति, तत्तुच्छम् । प्रतियोगिवैयकर ण्यघटक प्रतियोगितावच्छेदकवैशिष्ट्यस्य संबन्धसामान्येनोक्तौ धूमाभावप्रतियोगितावच्छेदक धूमत्वस्य कालिकेनायोगोलकव ह्न्यादौसत्त्वेन धूमत्वावच्छिन्नस्याधिकरणत्वस्यायोगोलकेसत्त्वा त् धूमाभावप्रतियोगिताया लक्षणाघटकत्वाद्धूमवान् बह्नेरित्यादा वतिव्याप्तिरतस्तद्वारणाय साध्यतावच्छेदकताघटकसंबंधेनप्रति योगितावच्छेदकवैशिष्ट्यस्यावश्यंविवक्षणीयतया समवायेनमहा कालान्यत्वविशिष्टस्याप्रसिद्धत्वात्, उभयप्रतियोगिकसमवायान भ्युपगमात्, स्वरूपसमवायाभ्यामेवतादृशवैशिष्ट्यसंभवात्, तथा च महाकालान्यत्वविशिष्टघटाभावस्य लक्षणाघटकत्वादिति, न चसाध्यतावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकवै

शिष्ट्याभिधाने वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य साध्यतायांघटाद्यभावप्रतियोगित्वस्य लक्षणाघटकत्वादव्याप्तिरितिवाच्यं विशेषरूपेणसंसर्गत्वानभ्युपगमात्, अभ्युपगमेवासाध्यतावच्छेदकताघटकसंसर्गभिन्न संबन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभाववत्त्वस्य प्रतियोगितावच्छेदकनिष्ठावच्छेदकतायां विवक्षणीयतया ऽतिव्याप्त्यव्याप्त्योरनवकाशात्, धूमत्वनिष्ठकालिकसंबन्धावच्छिन्नावच्छेदकतायां निरुक्तोभयवत्वस्यैवसत्वात्,घटत्वनिष्ठावच्छेदकतायां च वह्नित्वनिष्ठत्वाभावेनानिरुक्तोभयाभाववत्त्वात्, तत्पर्वतीय वह्न्याद्यसमानकालीनपदार्थाच्छिन्नाभावप्रतियोगितायां वा निरुक्तोभयाभाववत्त्वाद्वह्निमान्धूमादित्यादौ लक्षणसमन्वयसम्भवात्, यदिचप्रतियोगितावच्छेदकताघटकसंबन्धे नलाघवात् प्रतियोगितावच्छेदकवैशिष्ट्याभिधानात्, समवायसंबन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकप्रतियोगित्वस्य लक्षणघटकतयाऽतिव्याप्त्यसम्भवात्, समवायेन घटत्वनिष्ठावच्छेदकताकप्रतियोगित्वस्य तथात्वेनाव्याप्तिवारणसम्भवात्, एवञ्चप्रयोजनान्तरविरहेणावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्या निवेशान्महाकालान्यत्वविशिष्टघटाभावप्रतियोगित्वस्य लक्षणघटकत्वात्सहजत एवकालोघटवान् महाकालत्वादित्यत्रलक्षणसमन्वय, इत्युच्यते तदामहाकालनिरूपित विशेषणताविशेषेणघटादिसाध्यकेघटवान् महाकालत्वादित्यादौसाध्यताघटकतादृशकालिकेन महाकालान्यत्वविशिष्टघटस्याधिकरणाप्रसिद्ध्याऽव्याप्तिप्रसङ्गात्। अन्येतुयद्यत्संबन्धेनयद्धर्मावच्छिन्नानधिकरणं हेत्वधिकरणंतत्तत्संबन्धान्यसाध्यतावच्छेदकसंबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यंव्याप्ति, स्तथा

चसमवायादिसंबन्धेन घटत्वावच्छिन्नानधिकरणत्वस्य महाकालसत्त्वेन समवायादिसंबन्धभिन्नत्वस्यकालिकसंबन्धे सत्वात्कालोघटवान् महाकालत्वादित्यत्रलक्षणसमन्वयः । ननुसंयोगस्य नानात्वेन तत्तत्संयोगव्यक्तीनां यद्यत्संबन्धपदेनधर्तुं शक्यतया तत्तत्संयोगाभिन्नत्वस्य संयोगेबाधादव्याप्तिरितिचेन्न यद्यद्रूपावच्छिन्न संसर्गतानिरूपितयद्धर्म्मावच्छिन्न निरूपकताकाधिकरणतावदन्यत्वंहेतुमत, स्तदन्यत्वस्य साध्यतानिरूपितसंसर्गतावच्छेदकेविवक्षितत्वात्, न च संयोगत्वावच्छिन्नत्वस्य महानसीयसंयोगत्वावच्छिन्नसंसर्गतायां सत्वेनतत्संर्गतानिरूपितवह्नित्वावच्छिन्नानधिकरणत्वस्य धूमवति सत्वेनयत्पदेनसंयोगत्वस्यापि धर्त्तुंशक्यत्वात् । तद्वारणाय यद्यद्धर्म्ममात्रावच्छिन्नसंसर्गतानिरूपितेत्युक्तौ महानसीयत्वविशिष्ट संयोगत्वस्या पियद्यद्धर्म्मपदेनधर्त्तुंशक्यतया तदन्यत्वस्य संयोगत्वेविरहात्, विशिष्टस्यशुद्धानतिरिक्तत्वादितिवाच्यंयद्यद्रूपावच्छिन्नानुयोगितानिरूपकपर्याप्तिकावच्छेदकताकसंसर्गतानिरूपितयद्धर्म्मावच्छिन्न निरूपकताकाधिकरणतावदन्यत्व हेतुमतस्तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकत्वानिरूपितत्वस्य, यद्यद्रूपवृत्तिसंसर्गतानिरूपितयद्धर्म्मावच्छिन्न निरूपकताकाधिकरणतावदन्यत्वंहेतुमतस्तद्रूपावृत्तित्वस्य(१)वा, साध्यतानिरूपितसंसर्गतायां विवक्षित्वात्, यदिचयत्तत्त्वस्याननुगततयैकोपादानेऽन्यासंग्रहेण व्यभिचारिण्यतिव्याप्तिरित्युच्यते तदासंबन्धावशिष्टान्यसाध्यतावच्छेद

---

(१) (टि०) वृत्तित्वघटकावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति ।

कसम्बंधेन तद्धर्मावच्छिन्नसामानाधिकरण्यंतदित्यस्यविवक्षित त्वात् ॥ सम्बंधवैशिष्ट्यंच स्वतादात्म्यस्वावच्छिन्नसाध्यताव च्छेदकावच्छिन्ननिरूपकताकाधिकरणतावदन्यहेत्वधिकरणवृत्त्य भावप्रतियोगितावच्छेदकत्वोभयसंबंधेन स्वपदंसंबंधपरं अथवा हेत्वधिकरणवृत्तिभेदीयप्रतियोगिता निरूपिताधिकरणतानिष्ठा वच्छेदकता निरूपितावच्छेदकतावत्साध्यतावच्छेदकावच्छि न्ननिरूपकतानिरूपित · संसर्गतावच्छेदकतापर्याप्त्यधिकरणंय त्साध्यताघटकसंसर्गतावच्छेदकतापर्याप्त्य धिकरणंतदवच्छि न्नसंसर्गेणसाध्यसामानाधिकरण्यंव्याप्तिरित्यस्य निष्कृष्टत्वादि त्याहुः ॥ यत्त्वेतत्कल्पे दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वा दित्यादावव्याप्तिः । यत्पदेनतस्यापिसंबंधस्य ग्रहणासंभवादिति मतंतत्तुच्छम् । विषयितासंबंधस्यैवयत्पदेनग्रहणसंभवात् । विषयतयादधित्वविशिष्टप्रमेयसंबंधिषु ज्ञानभिन्नत्वस्यहेतुमतिस्थू लदध्यादावक्षतत्वात् । नचविषयित्वादेः संसर्गत्वेमानाभावा दितिवाच्यम् । घटस्यज्ञानमित्यत्र षष्ठीशेषइतिसूत्रविहितसंबंध सामान्यबोधकषष्ठ्यनुपपत्तेरतस्तस्यास्तथा त्वस्यावश्यकत्वादिति विभावनीयमिति । साध्यसाधनभेदेनव्याप्तेर्भिन्नतया व्याप्यवृ त्तिसाध्यकस्थलीयलक्षणंच प्रतियोगिवैयधिकरण्यन्नोपादेयम् । व्याप्यवृत्तित्वंच साध्यतावच्छेदकसंबंधेन स्वाधिकरणवृत्तिसाध्य तावच्छेदकसंबंधावच्छिन्नाभावाऽप्रतियोगित्वम् ॥ व्याप्यवृत्ति त्वघटकवृत्तित्वंच संबंधसामान्येनबोध्यम् । स्वाभाववत्त्वादेश्चवृ त्त्यनियामकत्वान्नात्मत्वादौव्याप्यवृत्तित्वहानिः ॥ व्याप्यवृत्ति साध्यकंच अयमात्माज्ञानादित्यादौ ज्ञानादिकंबोध्यम् । तथा चहेतुतावच्छेदकसंबंधेन हेतुतावच्छेदकाविशिष्टाधिकरणवृत्त्यभा

वीय साध्यताघटकसंसर्गावच्छिन्नप्रतियोगित्वं यद्धर्मानवच्छि न्नंतद्धर्मावच्छिन्नसामानाधिकरण्यमथवा हेतुतावच्छेदकसंबंधेन प्रकृतहेत्वधिकरणवृत्तिभेदीय प्रतियोगित्वं यत्संबंधावच्छिन्नय न्निष्ठावच्छेदकत्वानिरूपितं तत्संबंधेन तत्सामानाधिकरण्यं व्या प्तिः इयमेव निरवच्छिन्नविधेयताकानुमितिप्रयोजिका । नातो आत्मत्वद्रव्यत्वत्वाद्यनुपस्थितिदशायामयमात्मा इदंद्रव्यमित्या द्यनुमित्यनुपपत्त्यवकाशइति । ननुलघुधर्मस्यावच्छेदकत्वसंभवे गुरुधर्मस्य तथात्वानभ्युपगमादिति प्राचीननयेकश्चित्कल्पे धूम त्वघटत्वघ्राणग्राह्यगुणत्वादिनां प्रमेयधूमत्वकम्बुग्रीवादिमत्त्वघ्राणग्राह्य गुणत्वाद्यपेक्षयालघूनामेवप्रमेयधूमाद्यभाव प्रतियोगितावच्छेदक त्वेन निरुक्तप्रतियोगितानवच्छेदकप्रमेयधूमत्वाद्यवच्छिन्नसा वच्छिन्नसामानाधिकरण्यस्य द्रव्यादिहेतौसत्त्वेन तत्तद्रूपेणसा ध्यतायां द्रव्यत्वादिव्यभिचारिण्यतिप्रसंगः । वस्तुतस्तुकल्पे च प्रमेयवन्हिमान् धूमादित्यादौ वन्हित्वापेक्षया प्रमेयवन्हि त्वस्य गुरुतयानवच्छेदकत्वेन तदवच्छेद्यत्वाप्रसिद्ध्याऽव्याप्तिरि तिचेन्न । प्रतियोगितानवच्छेदकेत्यत्रावच्छेदकत्वस्यानतिरिक्त वृत्तित्वात्मकत्वात् । धूमाद्यभावप्रतियोगिताशून्ये प्रमेयधूमत्वा देरविद्यमानत्वेनातिव्याप्तिविरहात् ॥ अथतादृशप्रतियोगिता नतिरिक्तवृत्तित्वं तादृशप्रतियोगिताशून्यावृत्तित्वं तादृशयत्कि चित्प्रतियोगितानतिरिक्तवृत्तित्वंवा नाद्यः वन्ह्यादावपि धूमस मानाधिकरणप्रतियोगिव्यधिकरणतत्तद्वह्नित्वावच्छिन्नाभावप्रति योगित्वस्य यावत्त्वावच्छिन्नप्रतियोगित्वस्यचसत्त्वन तत्सामा न्याभाववतोऽप्रसिद्ध्याऽसम्भवापत्तेः नवा द्वितीयः प्रतियोगि तायाः प्रतियोगिस्वरूपत्वपक्षे प्रतियोगितदभावोभयस्वरूपत्व

पक्षेच धूमत्वादेस्तादृशप्रतियोगितातिरिक्तवृत्तितया धूमत्वादि रूपेणसाध्यतायां व्यभिचारिण्यतिव्याप्तेः प्रतियोगितायाना नात्वादितिचेन्न। प्रतियोगिताया अतिरिक्तत्वादनुगतत्वाच्चा तिव्याप्तिविरहात्। प्रतियोगितायाश्चातिरिक्तत्वं व्यवस्थापित मधस्तात्। यद्वाहेतुसामानाधिकरणयत्किंचिदभावप्रतियोगि तासामान्यशून्यावृत्तित्वस्य यत्प्रतियोगितावच्छेदकधर्मावच्छि न्नानधिकरणत्वं हेतुमतस्तत्प्रतियोगितावच्छेदकधर्मावच्छिन्न प्रतियोगितासामान्यशून्यावृत्तित्वस्यवा व्याप्यवृत्तिसाध्यकस्थली य लक्षणाभिप्रेतस्य विवक्षितत्वात्। पूर्वकल्पेसमनियताभावा नामैक्यानभ्युपगमात्। संयोगेनघटाभावस्य घटीयसंयोगेनप्रमे याभावस्यैकत्वेन घटाभावादिनिरूपित प्रतियोगितासामान्यशू न्यत्वस्याप्रसिद्ध्यासंभवानवकाशः। अथतार्णातार्णदहनवृत्तिद्वि त्वावच्छिन्नाभावप्रतियोगितासामान्यशून्येघटादौ वन्हित्वस्यावृ त्तितयावन्हित्वमप्यवच्छेदकंस्यात्तथाचाव्याप्तिरितिचेन्न। प्रकृते चानतिरिक्तवृत्तित्वं नप्रतियोगितासामान्यशून्यावृत्तित्व मपितुप्र तियोगितावच्छेदकशून्यावृत्तित्वमेव अवच्छेदकंच स्वसमानवृत्ति कंग्राह्यम्। तथाचस्वसमानवृत्तिकहेतुमन्निष्ठाभावप्रतियोगिताव च्छेदकानतिरिक्तवृत्तिभिन्नंयत्साध्यतावच्छेदकं तदवच्छिन्नसा मानाधिकरण्यस्य विवक्षितत्वात्। स्वसमानवृत्तिकत्वंच स्व पर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिता कपर्याप्ति प्रतियोगित्वमितिवन्हित्वादिकं नद्वित्वादिसमानवृत्तीतिनाव्या प्तिः। नन्वनतिरिक्तवृत्तित्वघटकवृत्तित्वस्य साध्यतावच्छेदक ताघटकसंबंधेनावश्यविवक्षणीयतया सत्ताश्रयवानभावत्वात् समवायेनप्रमेयवानभावत्वादित्यादौ च सत्तावदभावप्रतियोगि

तावच्छेदकसत्वाऽभाववत्सामान्यादिसमवेतत्वस्य प्रमेयाभाव प्रतियोगितावच्छेदकाभावस्यचाप्रसिद्ध्याऽभावांतरप्रतियोगिता वच्छेदकानतिरिक्तत्वस्य सत्तादौविरहेणातिव्याप्तिरितिचेन्न। स्वव्यापकतत्कत्वरूपस्यानतिरिक्तवृत्तित्वस्य विवक्षितत्वात् । व्यापकताच प्रतियोगितावच्छेदकताघटकसंबंधेन स्वावच्छेद्यप्र तियोगित्वसंबंधेनवेत्यन्यदेतत् । सत्तादौसत्वादिव्यापकत्वस त्वेनातिव्याप्तिविरहात् । नचसत्वावान्जातेरित्यादौ विशिष्ट सत्ताभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वस्य व्यापकतयाऽन तिरिक्तवृत्तित्वेनातिव्याप्तिः अव्यासज्यवृत्तिधूमत्वादेःपर्याप्त्य नभ्युपगमे धूमवान्वन्हेरित्यादौ धूमत्वादौस्वसमानवृत्तिकान तिरिक्तवृत्तित्वस्यासत्वेनातिव्याप्त्यापत्तिश्च धूमत्वस्यस्वपदेनग्र हणासंभवादितिवाच्यम् । निरुक्तप्रतियोगितावच्छेदकावच्छि न्नाभाववदसंबद्धस्वविशिष्टसामान्यकत्वस्या नतरिक्तवृत्तित्वस्य विवक्षितत्वात् । यद्वा हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबंधिनिष्ठाभावप्रतियोगिता नवच्छेदकंतत्वमेवत दित्यस्य विवक्षितत्वात् । यद्धर्म्मवैशिष्ट्यं साध्यतावच्छेद कताघटकसंबंधेन । संबंधित्वंच साध्यतावच्छेदकसंबंधेन । अभावेसाध्यतावच्छेदकसंबंधेन प्रतियोगिवैयधिकरण्यं बोध्यमि तिचिंत्यम् । वस्तुतस्तुकल्पेप्रतियोगिव्यधिकरणहेतुमन्निष्ठाभाव प्रतियोगितासामान्यं यद्धर्म्मविसिष्टसंबंधिनिष्ठप्रतियोगिव्यधि करणाभावप्रतियोगितानवच्छेदकानवच्छिन्नंभवति तद्धर्म्माव च्छिन्नसामानाधिकरण्यस्य विवक्षितत्वान्नाव्याप्तिः वस्तुतस्तु हेतुसमानाधिकरणाभावीयस्वरूपसंबंधावच्छिन्नप्रतियोगितासा मान्ये यद्धर्म्मविशिष्टसंबंधिनिष्ठाभावीयस्वरूपसंबंधावच्छिन्नप्र

तियोगितानवच्छेदकावच्छेद्यत्वाभावस्तद्धर्म्मावच्छिन्नसामाना
धिकरण्यं व्याप्तिरितिनकोपिदोषः ॥ एषारीतिर्यत्रसाध्यता
वच्छेदकंन प्रतियोगितावच्छेदकंतत्रैवनान्यत्र साध्यसाधनभेद
न व्याप्तेर्भिन्नत्वात् । नव्यास्तुगौरवज्ञानं नावच्छेदकत्वधीप्र
तिबंधकं । घटत्वापेक्षयाकंबुग्रीवादिमत्त्वं गुर्वितिप्रतीतिदशायां
कंबुग्रीवादिमान्नास्तीति प्रतीतिदर्शनात् गुरुधर्म्मस्यावच्छेदक
त्वसंभवाद्यथाश्रुतस्यैवसम्यक्त्वादितिप्राहुः ॥ वस्तुतस्तुगुरुध
र्म्मस्यानवच्छेदकत्वेविशिष्टसत्त्वं द्रव्यत्वव्याप्यमितिव्यवहारस्यैवा
नुपपत्तेः ॥ द्रव्यवृत्त्यभावप्रतियोगितावच्छेदकत्वत्वापेक्षयागौर
वेणविशिष्टसत्त्वसमानाधिकरणाभावप्रतियोगितवच्छेदकता त्व
स्यानवच्छेदकत्वात् । तादृशावच्छेदकभेदकूटत्वस्य जन्मसह
स्रेणापिवक्तुमशक्यत्वादिति व्याप्तिज्ञानंप्रतिव्यभिचारज्ञानाभा
वसहकृतसहचारज्ञानस्य कारणत्वंबोध्यम् । व्यभिचारशंका
चतर्कान्निवर्तते । यथाधूमोवन्हिव्यभिचारीनवेतिसंशयो धूमो
यदिवन्हिव्यभिचारीस्यात्तदा वन्हिजन्यांनस्यादितितर्कान्निव
र्तते । तर्कश्चबाधनिश्चयकालीनापाद्यव्याप्यापादकवत्तानिश्चयः
सचपञ्चविधः आत्माश्रयान्योन्याश्रयचक्रकाऽनवस्थाप्रमाणा
बाधितार्थकप्रसङ्गभेदात् । आत्माश्रयादिश्चोत्पत्तौस्थितौज्ञप्तौ
भवन्तीति । उत्पत्तौयथाघटोयादिघटजन्यः स्यात्तदाघटभिन्नः
स्यात् । स्थितौस्वंयदिस्ववृत्तिस्यादात्तास्वभिन्नंस्यादिति
ज्ञप्तौस्वज्ञानंयादिस्वज्ञानजन्यंस्यात्तदास्वभिन्नं स्यादित्यादिकंस्व
यमूहनीयम्। अन्यत्रापिकचिद्व्यभिचारशंकैवनोदेतिस्वक्रियाव्या
घातात् । पक्षत्वंसंदिग्धसाध्यधर्म्मवत्त्वं पक्षधर्मिकसाध्यताव
च्छेदकसम्बंधेन साध्यवत्तानिश्चयनिवर्त्त्यसंशयोवा ।सिपाधयि

षाविरहविशिष्टपक्षधर्मिकसाध्यवत्तानिश्चयाभावो वा पक्षता । सिषाधयिषाविरहाऽनुपादाने यत्रसिषाधयिषेन्द्रियसन्निकर्षतोव्याप्तिज्ञानं प्रत्यक्षात्मकसिद्ध्यात्मकं तदनंतरंस्मरणात्मकं अनुमितीष्टसाधनताविषयकं सिद्ध्यात्मकपरामर्शानंतराऽनुमित्सा ततोऽनुमित्यनुपपत्तिः । सिद्ध्यभावस्याऽसत्वात् सिषाधयिषाच प्रकृतपक्षकप्रकृतसाध्यकानुमितित्वप्रकारकेच्छाग्राह्या । तेन पाषाणमयत्वेनपर्वतेतेजस्त्वादिनावह्नेःसिद्धावपिविनानुमित्सया पर्वतत्वेनवह्नित्वेन पर्वतेवह्नेर्नानुमित्यनुपपत्तिः नचपर्वतेऽनुमितिर्जायतां वन्ह्यादिविधेयताकानुमितिर्जायतां प्रत्यक्षादिभिन्नंवन्हिज्ञानंजायतामित्याद्यनुमित्सादशायां सिद्ध्यात्मकपरामर्शाऽनुमित्यनुपपत्तिर्निरुक्ताऽनुमित्सात्वस्य तत्रतत्राऽसत्त्वादितिवाच्यम् । तत्रपर्वतेवन्ह्यनुमितिर्जायतामितीच्छांतरोत्पत्त्यैवानुमितेरानुभविकत्वात् । केचित्तुयद्यदिच्छासत्त्वसिद्धौसत्यामनुमितिः तत्तदिच्छाभावविशिष्टसिद्ध्यभावः पक्षता इत्याहुः तच्चिन्त्यम् तादृशाभावकूटज्ञानस्यजन्मसहस्रेणाप्यसंभवादिति । अथयत्रासिषाधयिषालिङ्गदर्शनादिक्रमेणसिद्ध्यात्मकपरामर्शः तत्रसिषाधयिषाविरहविशिष्टायाःसिद्धेः सत्त्वेनानुमित्यनुपपत्तेरितिचेन्न । अनुमित्सांतरोत्पत्त्यैवानुमितेःस्वीकारात् नचानुमित्सान्तरजनकानुमितीष्टसाधनताज्ञानेन पूर्वपरामर्शनाशात्कथमनुमितेः सम्भवइतिवाच्यम् अनुमितीष्टसाधनताविषयकपरामर्शानन्तरमनुमित्सा ततोऽनुमितिरितिफलबलात्तत्र कल्पनान्नकोऽपिदोषः । केचित्तुसिषाधयिषानाशे द्वित्रिक्षणाभ्यन्तरेऽनुमितेरानुभविकत्वं सिषाधयिषाविरहाविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पन्नस्वसमानाधिकरणप्रकृतपक्षसाध्यकानुमितिकसिद्धिभिन्नायाः सि

षाधयिषाविरहविशिष्टायाः सिद्धेरभावः पक्षता नचयत्रसिषाध
यिषानन्तरद्वितीयक्षणे सिद्धिस्तदनन्तरंपरामर्शस्ततोऽनुमितिर्न
स्यात् तथाविधसिद्ध्यभावस्यतत्रासत्त्वात् परामर्शक्षणएवाव्य
वहितोत्तरत्वपर्यवसानादितिवाच्यम् प्रथमक्षणमपेक्ष्यद्वितीयक्षण
स्येव द्वितीयक्षणमपेक्ष्यतृतीयक्षणस्याप्यव्यवहितोत्तरत्वम् तच्च
स्वाधिकरणक्षणध्वंसाधिकरण क्षणध्वंसाधिकरणक्षणध्वंसानधि
करणत्वेसति स्वाधिकरणसमयध्वंसाधिकरणत्वं स्वध्वंसाधिक
रणसमयध्वंसानधिकरणत्वेसति स्वाधिकरणसमयध्वंसाधिकर
णत्वंवा । एतत्कल्पेच सिषाधयिषाविरहोन स्वक्षणस्यविशेष
णं अपितु उत्तरक्षणस्य तेननयत्रसिद्ध्यात्मकपरामर्शस्ततोऽनुमि
तसाततोऽनुमितिस्तत्रसिषाधयिषाक्षणेऽनुमित्यापत्तिरन्यथा तत्र
त्यसिद्धेस्तथाविधाऽनुमितिकतया तद्भिन्नसिद्ध्यभावस्यपरामर्श
क्षणेसत्त्वात् तत्राऽनुमित्यापत्तेर्दुर्वारत्वात् । तत्रैवाऽनुमितिसंप
त्तयेद्वितीयसिषाधयिषाविरहः सिद्धिविशेषणमित्याहुस्तच्चिन्त्य
म् । मिश्रास्तु अनुमित्सायोग्यताविरहविशिष्टसिद्ध्यभावः प
क्षता योग्यताचसिषाधयिषानन्तरं यावत्कालेनाऽनुमितिर्जायते
तावानेवकालः फलबलेनबोध्या तथाचसिषाधयिषानाशाधिक
रणतावत्कालानुमित्सान्यतरविरहविशिष्टसिद्ध्यभावः पक्षता ।
तेनयत्रसिद्ध्यात्मकपरामर्शानन्तरक्षणेसिषाधयिषातत्र तावत्काल
विरहस्यसत्त्वेपिनक्षतिः ॥ यत्रसिद्ध्यनन्तरंपरामर्शस्तत्रपरामर्शा
नन्तरतृतीयक्षणेविनाऽनुमित्सामनुमितेरननुभाविकत्वे सिद्धिप
देनापि सिद्धिनाशाधिकरणः कालोलक्ष्यते । तथाच सि
षाधयिषासिषाधयिषानाशाधिकरण तत्तत्कालान्यतराभावविशिष्टसिद्धिनाशाधिकरणसिद्धितत्तत्कालान्यतराभावः पक्षतेति

कालपदंज्ञानपरंतेनकालस्य समवायेनात्मन्यसत्त्वेपिनक्षातिरिति प्राहुः। साध्यसिद्धिश्चसाध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपित पक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानं साध्यतावच्छेदकावच्छिन्न कोटित्वावच्छिन्नकोटिताशून्यत्वेसति प्रकृतपक्षधर्मिकप्रकृतसाध्यप्रकारकज्ञानंवा तेनतसंशये उभयविशेष्यतास्वीकारपक्षे निश्चयत्वापत्यवकाशोनवा वह्निघटवानितिनिश्चयस्यप्रथमेवह्निप्रकारत्वान्यघटप्राकारकत्वसत्त्वपि साध्यनिश्चयत्वहानिस्तथाविधकोटिताशून्यत्वस्याक्षतत्वादिति यत्रस्थलविशेषेपरामर्शदशायां साध्यासिद्धिः कदापिनोत्पन्ना तत्रसिद्ध्यभावस्य कारणत्वानभ्युपगमात् यत्रचसाध्यनिश्चयानन्तरं सिषाधयिषानोत्पन्ना तत्र सिद्ध्यभावमात्रंपक्षतेत्यादिकमूहनीयम् ॥ व्याप्तिपक्षधर्मताविशिष्टोहेतुस्सद्धेतुः तत्रनिरुक्तत्रिविधव्याप्तिविषयकज्ञानरूपानुमानं न्यायसाध्यम्भवति नीयतेप्राप्यतेविवक्षितार्थसिद्धिरनेनेति न्यायस्सचानुमितिचरमकारणलिङ्गपरामर्शप्रयोजकवाक्यसमूहः प्रतिज्ञाप्रतिपाद्यार्थविषयकहेतुप्रतिपाद्यार्थविषयकोदाहरण प्रतिपाद्यार्थविषयकोपनयप्रतिपाद्यार्थविषयकनिगमनप्रतिपाद्यार्थविषयकयत्किञ्चिच्छाब्दबोधनिरूपिता शब्दज्ञाननिष्ठा याया कारणता तत्तदवच्छेदककोटिप्रविष्टयत्किञ्चिज्ज्ञानीयाविषयताश्रयवर्णत्वव्यापकवर्णसमुदायत्व पर्य्यवसितोग्राह्यः उचितानुपूर्वीकत्वेसतिप्रतिज्ञादिपञ्चपर्याप्तसमुदायत्ववत्वम् स्वाश्रयप्रतिज्ञाव्यवहितोत्तरत्वशून्यहेत्वादिवृत्तियद्यत्समुदायत्वं तत्तत्समुदायत्वभेदकूटवत्त्वस्य समुदायत्वविशेषणत्वात् एकैकन्यायघटकप्रतिज्ञाहेत्वादिपञ्चवाक्येनातिव्याप्तिः न्यायलक्षणघटकप्रति

ज्ञादिकमुदासीनवाक्यवारकन्यायान्तर्गतत्वविशेषणरहितं वां ध्य,मतोनान्योन्याश्रयः। प्रतिज्ञाचप्रकृतपक्षेप्रकृतसाध्यवैशिष्ट्या वगाहिबोधजनकन्यायान्तर्गत वाक्यरूपा, प्रतिज्ञाद्यघटकत्वेसती ति वाक्येनिवेश्यं,नातः प्रतिज्ञाजन्यबोधसमानाकारकबोधजनके प्रतिज्ञाघटके(१)ऽव्याप्त्यत्र काशइति, हेतुत्वञ्चप्रतिज्ञावाक्यधीज न्यबोधकारणाकाङ्क्षा निवर्तकज्ञानजनकहेतुविभक्तिमद्वाक्यत्व म्॥ न्यायान्तगर्तत्वे सतिहेतुविशिष्टहेतुत्वविषयताबहिभूर्तविषय ताशून्यहेतुविशिष्टहेतु त्वविषयक बोधजनकवाक्यत्वंवा, सपक्षस पक्षान्यधर्म्मिकहेतुव्यापकसाध्यप्रकारकबोधजनकत्वेसति न्याया न्तर्गतवाक्यत्व, मन्वय्युदाहरणत्वम्, विपक्षविपक्षान्यधर्म्मिकसा ध्यबच्छेदहेतुमच्छेदप्रकारकबोधजनकतादृशवाक्यत्वं(२)व्यतिरेक्यु दाहरणत्वम्, उदाहरणवाक्यधीजन्यबोधकारणाकाङ्क्षानिवर्त्त कप्रकृतसाध्यव्याप्यहेतु विशिष्टप्रकृतपक्षविषयकबोधजनकतादृश वाक्यत्व, मुपनयत्वं, प्रकृतसाध्यव्याप्यहेतुज्ञाप्यप्रकृतसाध्यमत्पक्ष विषयकबोधजनकतादृशवाक्यत्व,निगमनत्व,मित्यन्यत्रविस्तरः। प्रकृतानुमितिप्रतिबन्धकयथार्थज्ञानविषयोहेतुदोषः, तदाश्रयोदु ष्टहेतुः। आश्रयता च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बं धेन बोध्या,तेन प्रकृतहेतुभिन्ने कालिकादिसम्बंधेनदोषस्यसत्वे पि न दुष्टत्वापत्त्यवकाशः, प्रकृतानुमितिपदेन साध्यव्याप्यहेतुम त्पक्षतावच्छेदकावच्छिन्न विशेष्यतानिरूपितसाध्यतावच्छेदक सम्बन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रकारताशाल्यनुमि

---

(१)(टि०) रमाधवः पूज्यइतिप्रतिज्ञाघटकमाधवः पू ज्यइतिभागे इत्यर्थः।

(२)(टि०) न्यायान्तर्गतवाक्यत्वमित्यर्थः।

तिसामान्यंबोध्यम्, तथाच तादृशानुमितित्वव्यापक प्रतिबध्यता निरूपितप्रतिबन्धकताशालियथार्थ ज्ञानाविषयत्वं हेतुदोषत्वम् । तेन पर्वतो वह्निमान् धूमादित्यादौ वह्निव्याप्यधूमवत्पर्वतो व ह्निमान् तादृशहृदश्च तथेत्यनुमितिप्रतिबन्धकप्रमाविषयत्वस्य वह्न्य भाववद्ध्रदादौसत्त्वेऽपि तथाविधवह्न्यभाववद्ध्रदवत्वस्य धूमे सत्वे पि चनाति व्याप्तिः, तथाविधानुमितिसामान्येहृदोनवह्निमानिति निश्चयप्रतिबध्यत्वस्यासत्वात्, बाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्र यासिद्धिषुचतुर्ष्वव्याप्तिवारणाय पक्षतावच्छेदकावच्छिन्नत्वस्य प्रवेशः । पक्षतावच्छेदकत्वञ्चपक्षतावच्छेदकतापर्य्याप्त्यधिकरण त्वम्, तेन काञ्चनमयहृदादिपक्षकस्थले नाश्रयासिद्ध्यादावव्या प्त्यवकाशः । बाधसत्प्रतिपक्षयोः सङ्ग्रहाय साध्यतावच्छेदकाव च्छिन्नस्योपादानम्,हृदोवाह्निमान् धूमादित्यादौ वह्न्यभाववद्ध्र दादिनिश्चयस्य द्रव्यविधेयकधूमजनकतेजस्त्वविशिष्टविधेयकानु मित्यप्रतिबन्धकत्वेपि तथाविधानुमितौ साध्यतावच्छेदकावच्छि न्नविधेयताकत्वाभावात्, साध्यतावच्छेदकावच्छिन्नत्वं च साध्य वच्छेदकतापर्य्याप्त्यधिकरणधर्म्मावच्छिन्नत्वम्, तेनपर्वतोमहान सीयवह्निमानित्यादौमहानसीयवह्न्यभाववान्पर्वतइत्यादिवाधा दिनिश्चयप्रतिबध्यत्वस्यपर्वतोवाह्निमान् महानसीयत्वानित्याद्यनुमि तावसत्वेपि बाधसत्प्रतिपक्षयोर्न्नाव्याप्त्यवकाशः । बाधव्यभिचार विरोधस्वरूपासिद्ध्याश्रयासिद्धिसत्प्रतिपक्षेष्वव्याप्ति(१)वारणा य प्रकृतसाध्यव्याप्तिविशिष्टप्रकृतहेतुमत्प्रकृतपक्षविषयकत्वस्य नि वेशः,व्यभिचारादावव्याप्तिवारणायप्रकृतसाध्यहेत्वोरुपादानम्,

(१) (टि०) काञ्चनमयवह्निसाध्यकस्थले साध्यासिद्धौ लक्षणसम्भवान्नासम्भवः ।

एवमग्रेपिबोध्यमिति॥नव्यास्तु अनुमितितत्कारणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वंदोषत्वम्, अनुमितिश्च प्रकृतपक्षधर्मिकप्रकृतसाध्यविधेयताशालिनीग्राह्या,तेननोदासीनेऽतिव्याप्त्यवकाशः। अथपर्वतो वह्निमान् ह्रदश्चतथेत्यनुमितेस्तथाविधतयातत्प्रतिबन्धकयथार्थज्ञानविषये वह्न्यभाववद्ध्रदादावतिव्याप्तिः, तथाविधान्यतरत्वस्य प्रतिबध्यतानवच्छेदकत्वेन प्रतिबध्यतायामन्यतरत्वावच्छिन्नत्वस्य निवेशासम्भवात्, तादृशान्यतरत्वव्यापकत्वनिवेशेतु तादृशान्यतरत्वव्यापकत्वस्य बाधादिनिश्चयप्रतिबध्यतायांविरहेण व्यभिचारविरोधस्वरूपासिद्धिसत्प्रतिपक्षबाधेष्वव्याप्ति(१) रिति चेन्नपक्षतावच्छेदकावच्छिन्न विशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकाताशाल्यनुमितित्वव्यापकत्व साध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिप्रकारतानिरूपित हेतुतावच्छेदकावच्छिन्न विशेष्यत्वावच्छिन्न प्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्न विशेष्यताशाल्यनुमितित्वव्यापकत्वान्यतरवतीया प्रतिबध्यता तन्निरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वमित्यस्य विवक्षितत्वा, न्नकोपिदोषः ॥ अन्वयव्याप्ति व्यतिरेकव्याप्तीविशिष्योपादाय तत्तद्व्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्न विशेष्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्न विशेष्यत्वस्यप्रवेशान्नैकोपादाने साधारण्यानुपसंहारित्व(२)योर

---

(१) (टि॰) साध्यासिद्ध्यादौ लक्षणसम्भवान्नासम्भव इति।

(२) (टि॰) साधारण्यं साध्याभाववद्वृत्तित्व विशिष्टहेतुः, अनुपसंहारित्वं साध्यनिष्ठाभावा प्रतियोगित्वविशिष्ट हेतुः॥

व्याप्तिरितिप्राहुः ॥ यत्तु साध्यव्याप्यहेतुमान्पक्षः साध्य वानितिसमूहालम्बनानुमितित्वव्यापकप्रतिबध्यता निरूपितप्र तिबन्धकताशालियथार्थज्ञानविपयत्वंत दि,ति । तत्तुच्छं, यत्र स्थलविशेषे साध्यतद्व्याप्ययोर्न्नसमूहालंबनानुमितिस्तत्र दोषे ऽव्याप्त्यापत्तेरिति, ॥ पर्वतो निर्वह्निरितिभ्रमविषये धूमो वह्ने र्व्यभिचारीतिभ्रमविषये चातिव्याप्तिनिराशाय यथार्थपदो पादानम्, यथार्थत्वं चात्र नित्यज्ञानावृत्तिविषयिताशून्यत्वं, पूर्वोक्तविशेष्यताविशिष्ट(१)प्रकारताशून्यत्वरूपंवा, बोध्यम्। ते नकिंचिदंशेप्रमात्वसत्वेपि नोक्तभ्रमविषये ऽतिव्याप्त्यवकाशः । अथ निरुक्तानुमितिप्रतिबन्धकप्रमाविषये व्यभिचारैकदेशे धूम त्वाद्यवच्छिन्ने हेत्वाभासत्वापत्तिरितिचेन्न, अनाहार्य्याप्रामा ण्यज्ञानानास्कन्दितनिश्चय वृत्तित्वविशिष्टयादृशविशिष्टविषय कत्वव्यापिका निरुक्तानुमितिप्रतिबन्धकता तादृशविशिष्टत्वस्य । हेत्वाभासपदार्थत्वात्, दोषघटकनिरूपितविषयित्वव्यापकत्वस्य निरुक्तानुमिति प्रतिबन्धकतायां विरहेणातिव्याप्तिविरहात् । अ नाहार्य्यत्वादिविशेषणोपादाना, दाहार्य्याप्रामाण्यज्ञानास्कन्दि तदोषविषयकनिश्चयस्यदोषविषयकसंशयस्यचा प्रतिबन्धकत्त्वेपि नासंभवइति । यत्तुयादृशविशिष्टनिरूपिताविषयित्वं निरुक्तानुमि तिप्रतिबंधकतानतिरिक्तवृत्तितादृशविशिष्टत्वं दोषत्वमिति, तत्तु

(१) (टि०) वैशिष्ट्यञ्चस्वनिरूपितत्व स्वाधिकरणावृ त्तित्वोभयसम्बन्धेन, वृत्तित्वञ्च स्वसामानाधिकरण्यस्वावच्छेद कसम्बन्धावच्छिन्नत्व स्वानवच्छेदकानवच्छिन्नत्व स्ववृत्तित्वेत चतुष्टयसम्बन्धेन स्वविशिष्टनिरूपकता काधिकरणतासंसर्गेण, स्ववृत्तित्वस्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेनेति, ॥

च्छं, निरुक्तानुमितिप्रतिबंधकताशून्यदोषविषयकसंशयादौ तथावि
धदोषविषयित्वसत्त्वेनासम्भवप्रसङ्गात्, नचानाहार्य्याप्रामाण्य
ज्ञानानास्कन्दितनिश्चयवृत्तित्वस्य विषयित्वविशेषणत्वान्नदोषा
वकाश, स्तथाविधविषयितायाः संशयादावभावादितिवाच्यं
विशिष्टस्यानतिरिक्ततयादोषनिरूपितविषयितायां प्रकृतानुमि
तिप्रतिबंधकताशून्य संशयादिवृत्तित्वसत्त्वेनतथाविधनिश्चयवृ
त्तित्वविशिष्टविषयितायामपितस्यसत्वात्, विशेष्यवृत्ति प्रतियो
गिकाभावस्य विशिष्टानुयोगिकत्वास्वीकारात्, यदिचप्रकृतानु
मिति प्रतिबंधकताशून्यानाहार्य्याप्रामाण्यज्ञानानास्कन्दितनिश्च
या वृत्तियादृशविशिष्टविषयित्वमित्युक्तौनदोषइत्युच्यते तदा
ह्रदोवह्निमान्धूमादित्यादौ बाधनिश्चयीयह्रदत्व विशिष्टनिरूपि
तविषयितायां तथाविधावृत्तित्वस्याक्षतत्वादतिव्याप्त्यापत्तेरि
(१) ति ॥ नचजातित्वेनह्रदत्वावगाहिवह्न्यभाववान् जातिमानि
त्यादिनिश्चयेवह्न्यभाववद्ध्रदत्वादि विशिष्टविषयकेप्रकृतानुमिति
प्रतिबंधकत्वस्यविरहादसम्भवइतिवाच्यं यादृशसमुदायत्ववृत्ति
निरूपकतानिरूपितविषयिताव्यापकत्वस्य प्रतिबन्धकतायां विव
क्षितत्वात्, वह्न्यभावह्रदत्वगतसमुदायत्ववृत्तिवह्न्यभाववद्ध्रद
त्वावच्छिन्ननिरूपकतानिरूपितविषयित्वस्य जातित्वेन ह्रदत्वाव
गाहिज्ञानेविरहेणासम्भववारणसम्भवात्। निरूपकतायांसमुदा

(१) (टि०) यदियद्रूपावच्छिन्न निरूपितविषयिता
त्वं प्रकृतानुमिति प्रतिबन्धकताशून्या नाहार्य्याप्रामाण्यज्ञा
नानास्कन्दित निश्चयनिरूपितवृत्तितानवच्छेदकंतद्रूपावच्छि
न्नत्वं दोषत्वमित्युच्यते तदाक्रदोवह्निमानित्यादौ कपिसंयो
गाभाववत्कपिसंयोगवत्यतिव्याप्तिः स्यादिति ॥

यत्वृत्तित्वञ्चस्वावच्छेदकतात्वावच्छिन्न पर्य्याप्त्यनुयोगितावच्छेदकत्वसंबंधेन, स्वंनिरूपकता ॥ केचित्तु पक्षतावच्छेदकाद्यंशेऽन्याप्रकारकत्वस्य निश्चयविशेषणत्वान्नदोषः, न च जलवान् वह्निमानित्यत्र वह्न्यभाववज्जलवदात्मकबाधादावव्याप्तिरिति वाच्यम् पक्षतावच्छेदकाघटकनिष्ठप्रकारतानिरूपितपक्षतावच्छेदकनिष्ठविशेष्यताशून्यत्वस्य तदर्थत्वात्, नचह्रदोवह्निमान्ह्रदत्वादित्यादौवह्न्यभाववद्वृत्तिह्रदत्वादिरूपसाधारण्येऽव्याप्तिः पक्षतावच्छेदकाघटकस्य वह्न्यभाववद्वृत्तित्वस्य ह्रदत्वांशेप्रकारत्वादितिवाच्यं यद्यद्रूपावच्छिन्नस्ययस्य यस्ययादृशविशिष्टदोषघटकता ततद्रूपावच्छिन्न तत्तन्निष्ठविषयताभिन्नकिञ्चिदवच्छिन्नविषयत्वानिरूपकत्वस्य विवक्षितत्वा,न्नाव्याप्तिरिति । नचतथापिह्रदोजात्यभाववानित्यत्रजातिमद्ध्रदादावव्याप्तिः जातित्वेनह्रदत्वावगाहिजातिमान्जातिमानितिनिश्चये ऽनुमितिप्रतिबन्धकत्वस्या सत्वादितिवाच्यम् यादृशरूपावच्छिन्नविषयितात्वं यादृशविशिष्टविषय कत्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं तादृशरूपावच्छिन्नविषयिताशून्यत्वस्य निश्चयविशेषणत्वा, दित्याहु ॥ स्तन्न, अभावत्वेनह्रदत्वावगाहिवह्न्यभाववानभाववानितिनिश्चयेवह्न्यभाववद्ध्रदत्वावच्छिन्न विषयके तथाविशेषणस्य सत्वात् वह्न्यभावद्ध्रदादावव्याप्ते, रितितुचिन्त्यम्, ॥ अथ वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदादावातिव्याप्तिःह्रदोवह्निमानित्यनुमितिंप्रति जलावच्छेदेनवह्न्यभावप्रकारकनिश्चयविशिष्टजलवद्ध्रदत्वविशिष्टविषयकनिश्चयत्वेनप्रतिबन्धकत्वस्यवह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वविशिष्टविषयकनिश्चये सत्वात्, न च प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य निवेशान्नातिव्या

प्ति(१)रितिवाच्यम्जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्र
दादावव्याप्तिः जलव्यापकोवह्न्यभावः जलवांश्च ह्रदइतिनिश्च
यदशायामनुमित्यनुत्पादानुरोधेन सर्वमतसिद्धनिश्चयविशिष्टनि
श्चयत्वेन प्रतिबन्धकतयैव निरुक्तसत्प्रतिपक्षनिश्चयदशायाम
प्यनुमित्यनुत्पादसम्भवात् विशिष्टविषयकनिश्चयत्वेन प्रति
बन्धकत्वान्तरे तत्र मानाभावादिति, यदि तस्य सत्प्रतिपक्षत्वा
नभ्युपगमात्, अन्यथा जलव्यापकवह्न्यभावकालीनत्वादिघटि
तस्यापि तथात्वापत्ते(२)रित्युच्यतेतदापिवह्निव्यापकीभूताभाव
प्रतियोगिजलवद्ध्रदात्मकासाधारण्येऽव्याप्तिः तन्निश्चयस्य जल
वान्ह्रदइतिनिश्चयविशिष्टवह्निव्यापकीभूताभावप्रतियोगिजलमि
ति निश्चयत्वेनैवप्रतिबन्धकतया-तत्प्रतिबन्धकतायां ज्ञानवैशिष्ट्या
नवच्छिन्नत्वविरहात्, यदि चासाधारण्यविषयकत्वानवच्छि
न्नत्वज्ञानवैशिष्ट्यावच्छिन्नत्वोभयाभाववत्वस्य निवेशादेव तत्रा
व्याप्तिवारणसम्भवादित्युच्यते तदा गगनाभाववदभाववत्का
लीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटात्मकबाधादा
वव्याप्ति, स्तादृशबाधविषयकनिश्चयस्या भावावच्छेदनग

---

(१) (टि॰) वह्न्यभाववज्जलवद्वृत्तिजलवान्ह्रदः, वह्न्य
भाववज्जलवत्कालीनजलवान्ह्रदः, जलवान्वह्न्यभाववान् ज
लवान्ह्रद, इत्यादिनिश्चयानां लाघवादेकेनैवोक्तनिश्चयविशि
ष्टनिश्चयत्वेन ह्रदोवह्निमानित्यनुमितिंप्रतिप्रतिबन्धकत्वं स्वी
क्रियतइति॥

(२) (टि॰) जलव्यापकवह्न्यभावकालीन जलवद्ध्र
दादेरपि सत्प्रतिपक्षत्वापत्तेरिति,।

गनाभावप्रकारकनिश्चयाविशिष्टाभाववत्त्वावच्छिन्न प्रकारतानि रूपिततादृशघटत्वावच्छिन्न विशेष्यताशालिनिश्चयत्वेनैवप्रति वन्धकत्वात्, तत्प्रतिवन्धकतायां च निरुक्तोभयस्यैवसत्त्वेन तादृशोभयाभाववत्त्वविरहात्, न च घटत्वावच्छेदेन गगना भाववद्घटस्यैव तत्रबाधत्वा, तद्विषयकनिश्चयस्य विशिष्टविषय कनिश्चयत्वेनैवप्रतिवन्धकत्वा, न्नाव्याप्तिरितिवाच्यं घटोगगना भाववद्भाववत्कालीन गगनवानित्यादौ गगनाभाववद्भावव त्कालीनगगनाभाववद्घटात्मकबाधादाव्व्याप्तिः घटधर्मिकवि शेषाभावनिश्चयस्य लाघवेनज्ञानविशिष्टज्ञानत्वेनैवप्रतिवन्धकत्वा त्।। एवंवह्निमद्वह्निमत्कालीनपर्वतोवह्न्यभाववानित्यत्र पर्वतत्वाव च्छेदेन वह्निमत्त्वस्याभावेनवह्निमत्तादृशपर्वतस्यैव बाधतया तद्वि षयकनिश्चये ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिवन्धकत्वाभावेन बाधा दावव्याप्ति,रतोज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य निवेशासम्भवान्निरु क्तविशिष्टेऽतिव्याप्तिस्तदवस्थैवेतिचेत्, अत्रकेचित् यादृशविशि ष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं निरुक्ता नुमितिप्रतिवन्धकतानातिरिक्तवृत्ति तादृशविशिष्टद्वयाघटितत्व स्यापियत्पदार्थेनविवक्षितत्वा, न्नातिव्याप्तिरित्याहुः, । तत्तुच्छं, तुल्ययुक्त्याजलव्यापकवह्न्यभावसमानाधिकरण जलवद्ध्रदा त्मकसत्प्रतिपक्षादावव्याप्तेः, नचतस्य सत्प्रतिपक्षत्वानभ्युपगमा न्नदोषइतिवाच्यं वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदा त्मकासाधारण्येऽव्याप्तिप्रसङ्गात्, नचवह्निव्यापकीभूताभावप्र तियोगिजलस्यैवासाधारणत्वमिति न तत्रा व्याप्तिरितिवाच्यं प्रतिवंधकज्ञानाविषयस्यादोषत्वा, दन्यथादोषलक्षणस्य तत्रा व्याप्तिप्रसङ्गात्, प्रकृतानुमिति प्रतिवंधकतायांतद्विषयिताव्या

पक्षत्वविरहात्, ॥ अथदोषलक्षणेयद्विषयकनिश्चयेपक्षधर्म्मिक हेतुमत्तानिश्चयकालीनत्वस्यनिवेशात्, प्रकृतानुमित्यप्रतिबन्ध कत्वासाधारण्य विषयिताशून्यत्वोभयाभावोय द्रूपावच्छिन्न विषयिताव्यापकस्तद्रूपावच्छिन्नत्वस्यवादोषलणत्वा, न्नदोष इतिचेन्न घटपक्षकनिरुक्तगगनाभावसाध्यकस्थलीयस्यनिरुक्तप र्वतपक्षकवह्निसाध्यकस्थलीयस्य चबाधस्य विशिष्टद्वयाघटित त्वात्, यदिचविशिष्टद्वयविषयितायां स्वानवच्छेदकविषयिता शून्यत्वसंबंधेन प्रकृतानुमितित्वव्यापकप्रतिबन्धकता निरूपितप्र तिबध्यताविशिष्टान्यत्वस्यानिवेशान्ननिरुक्तबाधयोरसङ्ग्रह स्याव काशइत्युचयते तदाताद्दशपरम्परायाः संसर्गत्वानभ्युपगमेपूती काराभावात्, वह्न्यभाववज्जलवद्वृत्तिजलाभाववद्वह्निमत्काली नहृदोवह्निमान् धूमादित्यादौ वह्न्यभाववज्जलवद्वृत्तिजलव द्धृदादावतिव्याप्तिप्रसंगाच्च, प्रकृतानुमितेरपिवह्न्यवच्छेदेन ताद्दशजलाभावप्रकारकनिश्चयविशिष्टवह्निप्रकारकहृदविशेष्य कनिश्चयत्वेन प्रतिबन्धकतयावह्न्यभाववज्जलवद्वृत्तिजलवान् हृदइतिज्ञानीयविशिष्टविषयताद्वयेप्रतिबध्यताविशिष्टान्यत्वाभा वादिति, नचानुमितित्वव्यापकप्रतिबन्धकतायां ज्ञानवैशिष्ट्या नवच्छिन्नत्व निवेशान्नातिव्याप्तिरितिवाच्यं वह्न्यभाववद्व ह्न्यभाववद्वह्निमद्वह्निमत्कालीनिपर्वतो वह्न्यभाववानित्यादौ वाधनिश्चयस्यानुमितिं प्रति अनुमितेश्चबाधबुद्धिंप्रतिज्ञानवि शिष्टज्ञानत्वेनैवप्रतिबन्धकतयाऽनुमितित्वव्यापकज्ञानवैशिष्ट्या नवच्छिन्नप्रतिबन्धकत्वान्तरनिरूपित प्रतिबध्यताविशिष्टान्य त्वस्यबाधघटकावीशिष्टद्वयाविषयतायां सत्वात्तत्रत्यविशिष्टबाधा दावव्याप्त्यापत्ते, रितिविभावनीयम्, ॥ वस्तुतस्तुपक्षसाध

नभेदेनहेतु दोषलक्षणस्यनानात्वात् ह्रदपक्षकवह्निसाध्यक धूम हेतुकस्थलीयदोषलक्षणे वह्न्यभाववज्जलह्रिजलवद्ध्रदविष यकनिश्चयधर्म्मिकाप्रामाण्यज्ञानाभावादीनां लाघवेन प्रयोजन विरहेणच, यद्रूपावच्छिन्नविषयिताशालिनिश्चये निवेशाभावेन तत्रातिव्याप्त्यभावा, न्नकोपि दोष इति ॥ ननुवह्निमान्द्रव्यत्वा दित्यादौ मेयत्वविशिष्ट वह्न्यभाववद्वृत्तिद्रव्यत्वाद्यात्मकव्य भिचारादावतिव्याप्तिः तादृशविशिष्टविषयकनिश्चयस्यनिरु क्तानुमितिविरोधित्वादितिचेन्न, अनाहार्य्याप्रामाण्यज्ञानानास्क न्दितत्वादितिवत् स्वावच्छिन्नाविषयकप्रतीतिविषतावच्छेदक प्रकृतानुमितिं प्रतिबंधकतानतिरिक्तवृत्तिविषयिता निरूपकताव च्छदकरूपावच्छिन्नविषयिताशून्यत्वस्यनिश्चयेनिवेशात्, मेयत्व विशिष्टव्यभिचारत्वावच्छिन्ना विषयकप्रतीतिविषपतावच्छेदक तथाविधानातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकव्यभिचार त्वाद्यवच्छिन्नविषयिताशून्यत्वस्य मेयत्वविशिष्टव्यभिचारविषय कनिश्चये[१]विरहेणयद्रूपपदेन मेयत्वव्यशिष्टभिचारत्वादीनां ग्र हणासम्भवात्, । स्वपदंयद्रूपाच्छिन्नेलक्षणंसङ्गमनीयंतद्रूपं, । स र्वंगगनवद्वाच्यत्वादि-त्यादौगगनाभाववद्वृत्तिवाच्यत्वत्वावच्छि न्नाविषयकप्रतीतिविषयतावच्छेदकगगनाभाववत्सत्त्वाश्रयाविष यकप्रतीतेरप्रसिद्ध्याव्यभिचारादावव्याप्तिवारणायचरमावच्छि न्नत्वनिवेशः, मेयत्वविशिष्टव्यभिचारस्य शुद्धव्यभिचारानति रिक्ततयातदा(?)श्रयाविषयकत्वस्य व्यभिचारप्रतीतौ विरहेणमे यत्वविशिष्टव्यभिचारा दावतिव्याप्तिवारणाय, गगनाभावव

(१) (टि०) तत्पदं मेयत्वविशिष्टव्यभिचारत्वपरं, ।

त्सर्वत्वाश्रयाविषयकप्रतीत्यप्रसिद्ध्यानिरुक्तस्थलेबाधेचाव्याप्तिवारणायच, प्रथमावच्छिन्नत्वस्यनिवेशः, गगनाभाववत्सर्वत्वावच्छिन्नाविषयकप्रतीतिविषयगगनाभाववद्वृत्तिगाच्यत्ववृत्तित्वस्यगगनाभाववत्सर्वत्वेसत्वेनतदवच्छिन्नाविषयकत्वस्यगगनाभाववत्सर्वविषयकनिश्चयेविरहेणाव्याप्तिवारणायस्वावच्छिन्नाविषयकप्रतीतिविषयवृत्तित्वमुपेक्ष्यप्रतीतिविषयतावच्छेदकत्वनिवेशः । वह्न्यभाववद्ध्रदत्वावच्छिन्नाविषयक प्रतीतिविषयतावच्छेदकवह्न्यभावत्वादिकमादायासं भववारणाय प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति विषयतावच्छेदकत्वस्य निवेशः ॥ न च तथाविधप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयितासामान्यकत्वमेवास्तु, त्वमनतिरिक्तवृत्तित्वनिवेशनेतिवाच्यंह्रदोजलवद्ध्रदकालीनवह्निमान् जलादित्यादौजलवद्ध्रदकालीनवह्निव्यापकीभूताभावप्रतियोगिजलात्मकासाधारण्ये,घटोगगनाभाववदभाववत्कालीनगगनवानित्या दिस्थलीयनिरुक्तबाधादौचाव्याप्तिप्रसंगात्, जलवद्ध्रदत्वावच्छिन्नविषयितासामान्यस्य गगनाभाववदभाववत्वावच्छिन्नविषयितासामान्यस्य च निरुक्तानुमितिनिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकतयास्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकजलवद्ध्रदत्वाद्यवच्छिन्न विषयिताशून्यत्वस्य तादृशतादृशदोषविषयकानिश्चयेविरहात् ॥ अथ धूमव्यभिचारिवह्निमान्धूमवान् वह्नेरित्यादौ व्यभिचारघटितबाधेऽव्याप्तिः, बाधाविषयकप्रतीतिविषयव्यभिचारविषयि ताशून्यत्वस्यबाधविषयकनिश्चयेविरहादितिचेन्न तत्रप्रकृतानुमितेरप्रासिद्ध्याहेत्वाभासदोषानभ्युपगमा, दपार्थकदोषात्मकनिग्रहस्थानादेवबाधादिनोनिवृत्तेः, एतेनानिर्वह्निः पर्वतोवह्निमानित्यादावनुमित्य

प्रसिद्ध्यावह्निमत्पर्वतात्मकाश्रयासिद्ध्यादावव्याप्ति, रितिनिरस्तम्, ॥ अथवायादृशपक्षकयादृशसाध्यकयादृशेहेतुकस्थलेयावन्तोदोषास्तावदन्यतमस्यदोषत्वात् । वस्तुतस्तुनिर्वह्निः पर्वतो वह्निमानित्यादिस्थलएवनिरुक्तान्यतमस्यदोषत्व, मन्यत्रानुमिति घटितस्यैवदोषत्वं, (१)पक्षसाध्यहेतुभेदेनदोषलक्षणस्यनानात्वात्, नचदोषशब्दस्यनानार्थत्वापत्तिरितिवाच्यं व्याप्त्यादिशब्दवत्तस्यापिनाथार्थत्वस्येष्टत्वादिति, ॥ सव्यभिचारविरोधसत्प्रतिपक्षासिद्धिवाधभेदेनपञ्चविध, स्तत्रसाध्यसन्देहजनककोटिद्वयोपस्थितिजनकता,पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्ना,तद्रूपवान् व्यभिचारः ।साध्यसन्देहंप्रतिसाधारणधर्म्मवद्धर्म्मिज्ञानासाधारणधर्म्मवद्धर्म्मिज्ञानविप्रतिपत्तिवाक्यज्ञानजन्य कोट्युपस्थितित्वेनहेतुत्वात्, साधारण्यादौ लक्षणसमन्वयः । सन्देहं प्रतिसाधारणादि धर्म्म प्रकारकज्ञानजन्य कोटिद्वयोपस्थितित्वे नैवकारणत्वं, धर्म्मिज्ञानस्य चस्वातन्त्र्येणकारणत्व, मिति सिद्धान्तावलम्बनेतु यद्रूपावच्छिन्न प्रकारताशालिज्ञानत्वेनसाध्य संदेहजनक कोटिद्वयोपस्थितिजनकत्वं, तद्रूपवान्व्यभिचारः । विशिष्टसाध्य साधन ग्रहत्वाव्यापक प्रकृतसाध्य निरूपितव्याप्तिप्रकारक प्रकृतहेतुधर्म्मिकग्रहत्वव्यापक प्रतिवध्यतानिरूपित प्रतिबन्धकत्वं यादृशविशिष्टनिरूपितविषयिताशालिनिश्चयत्वव्यापकं, तादृशविशिष्टोवा,व्यभिचारः ॥ व्याप्तिप्रकारतेत्यत्र तत्तद्व्याप्ती

(१) (टि०) प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति विषयितानिरूपकतावच्छेदकरूपवत्वं दोषत्वमितिभावः ।

नांविशेष्योपादायनिवेशः कार्य्य,ः तेनैकोपादानेनान्यत्राव्याप्त्य
वकाशइति । स, साधारणासाधारणत्वानुपसंहारित्वभेदात्त्रि
विधः । तत्रसाध्याभाववद्वृत्तित्वंसाधारण्यं, हेतुधर्म्मिकसाध्या
भाववदवृत्तित्व प्रकारक, साध्यतावच्छेदकविशिष्टसाध्यवत्वाव
च्छिन्नप्रतियोगिताकभेदवदवृत्तित्वप्रकारक, साध्यतावच्छेदकध
र्म्मिकहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वप्रकारक, ग्रहत्व
व्यापकविशिष्टसाध्यसाधनग्रहत्वाव्यापकप्रतिबध्यतानिरूपितप्र
तिबन्धकतावच्छेदकत्वावच्छिन्नविषयिताकरूपवत्वं वा साधा
रण्यं, । धूमाववदवृत्तिद्रव्यत्वकालीन धूमवान्द्रव्यत्वादित्यादिस्थ
ले धूमाभाववदवृत्तित्वस्यद्रव्यत्व निष्ठस्य साद्ध्याप्रसिद्धित्वान्न
साधारण्या व्याप्तिरितिबोध्यम्, साधननिष्ठसाध्याभाववद्वृ
त्तित्वसाध्यवदन्यवृत्तित्व साध्यतावच्छेदकनिष्ठहेतुसमानाधिक
रणाभाव प्रतियोगितावच्छेदकत्वादेः साधारण्यपदार्थत्वात्,
तत्रतत्रनिरुक्तरूपत्वस्य सत्वेनलक्षणसमन्वयः ॥ साध्यतदभाव
वद्व्यावृत्तत्व, मसाधारण्यं, वह्निमान्गगनादित्यादौ गगननिष्ठ
तादृशस्यासाधारण्यत्वं बोध्यम्, प्रकृतहेतुनिष्ठसाध्यव्यापकीभू
ताभावप्रतियोगित्वंवा, ऽसाधारण्यं, ह्रदोवह्निमान् जलादि
त्यादौजलनिष्ठवह्निव्यापकाभूताभाव प्रतियोगित्वादेरसाधारण्य
त्वादिति ॥ केवलान्वयिधर्म्मावच्छिन्नपक्षकत्वेसति, अत्यन्ताभा
वाप्रतियोगिसाध्यकत्व, मनुपसंहारित्व, मित्यन्यत्रविस्तरः ॥
साध्यासामानाधिकरण्यं विरोधः ॥ प्रकृतानुमितित्वव्यापक प्र
तिबध्यतानिरूपित प्रतिबन्धकतावच्छेदकत्वेसतिप्रकृतपक्षधर्म्मि
क प्रकृतसाध्यनिरूपितव्याप्तिविशिष्टहेतुप्रकारकग्रहत्वाव्यापकप्र
कृतानुमितित्वव्यापक प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छे

दकविषयित्वावच्छिन्नानुमिति निष्ठजन्यतानिरूपितजनकताव च्छेदिकायद्रूपावच्छिन्न निरूपितविषयिता, तद्रूपावच्छिन्न त्वं, आचार्य्यभिन्नमतेतु प्रकृतपक्षधर्म्मिक प्रकृतसाध्यविधेय कानुमितित्वव्यापकप्रतिबध्यता निरूपित प्रतिबन्धकतावच्छेद कत्वेसतिविशिष्टपक्षविशिष्टसाध्यग्रहत्वा व्यापकप्रकृतपक्षधर्म्मिक प्रकृतसाध्यविधेयकानुमिति त्वव्यापकप्रतिबध्यतानिरूपितप्रति बन्धकतावच्छेदकविषयित्वावच्छिन्नानुमिति निष्ठजन्यतानिरू पितजनकतावच्छेदिकायादृशविशिष्टनिरूपितविषयितातादृशस त्वं, सत्प्रतिपक्षत्वम् । ह्रदोवह्निमान्धूमादित्यादौवह्न्यभावव्याप्य व्याप्यवद्ध्रदादावतिव्याप्तिवारणायसत्यन्तम्, वह्न्यभाववद्ध्रदा दावति व्याप्तिवारणाय जनकतावच्छेदकान्तम्, काञ्चनमय ह्रदः काञ्चनमयवह्निमानित्यादौ काञ्चनमयत्वाव्याप्यवद्ध्रदा दौकाञ्चनमयत्वाभावव्याप्यवद्वह्न्यादौचातिव्याप्तिवारणाय वि शिष्टपक्षविशिष्टसाध्यग्रहत्वाव्यापकत्वस्योपादानम् ॥ साध्या भावव्याप्यवत्पक्ष, पक्षनिष्ठसाध्याभाव व्याप्य, पक्षवृत्तित्वव्या प्यवत्साध्याभाव, साध्याभावनिष्ठपक्षवृत्तित्वव्याप्य, पक्षनिष्ठा भावप्रतियोगित्वव्याप्यवत्साध्य, साध्यनिष्ठपक्षनिष्ठाभावप्रतियो गित्वव्याप्य, गुणीयत्वाभावव्याप्यवत्संयोगादि, भेदेनसत्प्रतिप क्षोऽनेकविधः । अथोन्नेयघटकप्रतिबध्यतातां साध्यतावच्छेदका वच्छिन्नप्रकारत्वावच्छिन्नत्वनिवेशादेवकाञ्चनमयत्वाभावव्याप्य वद्ध्रदादावतिव्याप्तिवारणसम्भवात्, ह्रदोनकाञ्चनमयइतिनि श्चयादि प्रतिबध्यत्वादेर्वह्नित्वा वच्छिन्नप्रकारत्वा नवच्छिन्न त्वात्, विशिष्टपक्षादिग्रहत्वाव्यापकत्व प्रकृतपक्षधर्म्मिक प्रकृ तसाध्यविधेकानुमिति त्वव्यापकत्वयोर्न्निवेशोव्यर्थ इति चे

भ्रमह्निमद्ध्रदकालीनपर्वतो वह्निमान्धूमादित्यादौ वह्न्यभाव व्याप्यवद्ध्रदादावतिव्याप्तिः, ह्रदोनवह्निमानितिनिश्चयप्रतिब ध्यतायां वह्नित्वावच्छिन्न प्रकारत्वावच्छिन्नत्वस्य सत्वात् नचपक्षतावच्छेदकावच्छिन्न विशेष्यत्वनिष्ठावच्छेदकतानिरू पितत्वस्य साध्यप्रकारत्वनिष्ठावच्छेदकतायां विवक्षणेनैवाति व्याप्तिवारणसम्भवादितिवाच्यं ह्रदत्वस्यापिपरम्परयापक्षता वच्छेदकत्वात्, नचसाक्षात्पक्षतावच्छेदकावाच्छिन्नविशेष्यत्वा वच्छिन्नत्वस्य निवेशान्नातिव्याप्तिरितिवाच्यम् साक्षात्वस्यदु र्निर्वचत्वात्, नचपक्षतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगि तावच्छेदकरूपवृत्तिविशेष्यत्व निष्ठावच्छेदकतानिरूपितत्वस्य निवेशान्नातिव्याप्तिरितिवाच्यं जातिर्जातिमज्जातिमतीजाति त्वादित्यादौ जात्यभाववज्जाते स्साध्यासिद्धितयाजात्य भाव व्याप्यवज्जातेरपितत्वा, दितिसत्प्रतिपक्षानात्मकेतत्रातिव्याप्ते, स्तथाहि जातित्वावच्छिन्नविशेष्यतानिरूपितजातित्व निष्ठाव च्छेदकताकप्रकारताशालि बुद्धित्वावच्छिन्नप्रतिबध्यताया स्त थाविधत्वात्, जातिमज्जातित्वावच्छिन्नप्रकारतायाअपिजाति त्वावच्छिन्नप्रकारतात्वेनप्रतिबध्यतावच्छेदकत्वात्, साध्यताव च्छेदकतापर्य्याप्त्यधिकरण निष्ठावच्छेदकतानिरूपितावच्छेद कतात्वावच्छिन्नावच्छेदकता निरूपितप्रकारतानिष्ठावच्छेदक तानिरूपितत्वस्य प्रतिबध्यतायांनिवेशे ह्रदः काञ्चनमयवह्निमा नित्यादौ वह्न्यभावव्याप्यवद्ध्रदादावव्याप्तिःह्रदोनवह्निमानि तिनिश्चयप्रतिबध्यतायां काञ्चनमयत्वनिष्ठावच्छेदकतायाऽन वच्छेदकत्वेनतस्या लक्षणाघटकत्वात्, यदिनिरुक्तस्थलेजात्य भावव्याप्यवज्जातेः सत्प्रतिपक्षत्वमभ्युपेयतेतदाविशिष्टसाध्य

ग्रहाविरोधित्व निवेशंपितत्राव्याप्तेर्व्वारणं गौर्वाणगुरूणामप्य शक्यमितिध्येयम्, ॥ परंतुपर्वतोगुणीयसंयोगेनवह्निमानित्यादौ गुणीयत्वाभाववान् संयोग इतिनिश्चय प्रतिवध्यतायां वह्नित्वा वच्छिन्न प्रकारत्वावच्छिन्नत्वस्यविरहेण गुणीयत्वाभावव्याप्य वत्संयोगात्मकसत्प्रतिपक्षे ऽव्याप्तिभियासाध्यतावच्छेदकाव च्छिन्न प्रकारत्वावच्छिन्न त्वस्यनिवेशासम्भवा, त्काञ्चनमय त्वाभावव्याप्यवद्ध्रदादावतिव्याप्ति वारणायविशिष्टपक्षसाध्य ग्रहाविरोधित्वनिवेशस्यावश्यकत्वा, दितिप्राहुः । सत् प्रतिप क्षो, विरोधिपरामर्षो, यस्य परामृश्यमाणस्य हेतोरितिविग्रहेणस त्प्रतिपक्षवोध्यस्वव्यवहारौपयिकलक्षणन्तु प्रकृतानुमिति विरो ध्यनुमितिजननयोग्योपस्थिति प्रतिरुद्धकार्य्यकसाध्यसिद्ध्यौप यिकपरामर्षविषयत्वे सतिप्रकृतलिङ्गत्वं, बाधोपस्थितिसमर्थोप स्थितिकालीनसाध्यसिद्ध्यौपयिकपरामर्षाविषयत्वेसतिप्रकृतलि ङ्गत्वम्वा, ॥ शब्दोनित्यः श्रावणत्वादित्यत्रशब्दोऽनित्यः कृतक त्वादित्यत्रचनित्यत्वव्याप्यश्रावणत्ववान् शब्दः, अनित्यत्वव्याप्य कृतकत्ववान्शब्द इति परामर्शद्वयकालेश्रावणत्वादिहेतौसत्प्रति पक्षत्वव्यवहाराभवतितिवोध्यमितिसंक्षेपः ॥ विशिष्ट पक्षे वि शिष्टहेतुप्रकारकविशिष्टवसाध्यविषयकग्रहत्वव्यापकप्रतिवध्यता निरूपितप्रतिवन्धकतावच्छेदकस्वावच्छिन्न विषयताकधर्मस्वा वच्छिन्नाविषयकप्रतीतिविषयतावच्छेदक प्रकृतसाध्यव्याप्यता वच्छेदक धर्मघटितान्यतरवान सिद्धिरिति । स्वरूपासिद्धि पक्षासिद्धिसाध्यासिद्धि हेत्वसिद्धिव्याप्यत्वासिद्धि भेदात् प ञ्चविधाऽसिद्धिः, काञ्चनमयह्रदः काञ्चनमयवन्हिमान् का ञ्चनमय नीलधूमादित्यत्रपञ्चानामुदाहरणं वोध्यम्, ॥ वि

ष्टपक्षविशिष्टहेतुग्रहत्वाव्यापकप्रकृतपक्षेप्रकृतहेतुग्रहत्व व्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता वच्छेदकस्त्वावच्छिन्नविषयिताकधर्म्मवान् स्वरूपासिद्धिः, प्रकृतस्थले, (१)हृदोद्रव्यंधूमवत्वादित्यादौच, धूमाभाववद्ध्रदस्यस्व रूपासिद्धित्वाल्लक्षणसमन्वयःकार्यः,धूमाभावव्याप्यवद्ध्रदस्यापिस्वरूपासिद्धित्वान्नतत्राति व्याप्तिशंकेतिविशिष्टपक्षग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्त्वावच्छिन्नविषयिताकधर्मवान्, पक्षासिद्धिः, प्रकृतस्थले काञ्चनमयत्वाभाववद्ध्रद, कांञ्चनमयत्वाभावव्याप्यवद्ध्रदादौ, लक्षणसमन्वयः कार्यः॥ विशिष्टसाध्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्त्वावच्छिन्न विषयिताकधर्मवान्, साध्यासिद्धिः, प्रकृतस्थलेकाञ्चनमयत्वाभाववद्ध्रदस्य साध्यासिद्धित्वात् तत्रलक्षणसमन्वयः कार्यः ॥ विशिष्टहेतुग्रहत्वव्यापकप्रतिबध्यता निरूपितप्रतिबन्धकतावच्छेदकस्त्वावच्छिन्नविषायिताकधर्मवान्, हेत्वसिद्धिः, प्रकृतस्थले, काञ्चनमयत्वाभाववद्धूमादेः स्वरूपासिद्धित्वात् तत्रलक्षण समन्वयः कार्यः ॥ स्वसमानाधिकरणस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदक प्रकृतसाध्यव्याप्यतावच्छेदकधर्मघटितोधर्मो,व्याप्यत्वासिद्धिः, (२)पर्वतोवह्निमान् नीलधूमादित्यादौनीलधूमत्वस्यविशिष्टान्तरतथाविधूमत्वघटितत्वात् व्याप्य

(टि०)(१) सर्वंचप्रकृत स्थलइत्यस्य काञ्चनमयह्रदः काञ्चनमयवह्निमान् काञ्चनमयनील धूमादित्यत्रेत्यर्थः,

(टि०) (२) घटितत्वञ्चस्वावच्छिन्ना विषयक प्रतीतिविषयतानवच्छेदकत्वम् ।

त्वासिद्धित्वं, ॥ विशिष्टपक्षविशिष्टसाध्यग्रहत्वाव्यापकं प्रकृतपक्षेप्रकृतसाध्यवैशिष्ट्यावगाहि ग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मवान्, बाधः, ह्रदोवह्निमानित्यत्र, वह्न्यभाववद्ध्रद, ह्रदवृत्तित्ववह्न्यभाव, ह्रदावृत्तिवह्नि, ह्रदनिष्ठाभावप्रतियोगिवह्निप्रभृति, बाधादौ, १ लक्षणसमन्वयः कार्य इति॥ अथवह्न्यभावव्याप्यवद्ध्रदादिनिश्चयस्यापितथाविधबुद्धिविरोधित्वात् तद्विषयेऽतिव्याप्तिरितिचेन्न तथाविधग्रहत्वव्यापकप्रतिबन्धकतानिरूपित प्रतिबध्यतावच्छेदकत्वस्यैवस्वावच्छिन्नविषयितायां विवक्षितत्वात्, तदभावव्याप्यवत्तानिश्चयस्य प्रतिबध्यत्वात् तद्विषयेऽतिव्याप्तिविरहात्, न च वह्निव्यापकाभावसाध्यकस्थलेवह्निमत्पर्वतादावतिव्याप्तिः तद्वत्ताबुद्धिं प्रतितद्व्यापकाभाववत्तानिश्चयस्य प्रतिबन्धकत्वात्, पर्वतोवह्न्यभावव्याप्यवानित्यत्रवह्निमत्पर्वतेचातिव्याप्तिः, तद्वत्ताबुद्धिंप्रतितदभावव्याप्यवत्ता निश्चयस्यप्रतिबन्धकत्वादितिवाच्यं तथाविधग्रहत्वव्याक प्रतिबध्यतानिरूपिप्रतिबन्धकतावच्छेदकत्वे सतितथाविधग्रहत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यता वच्छेदकत्वस्यस्वावच्छिन्नविषयितायां निवेशात्, सत्प्रतिपक्षनिश्चयेप्रतिबध्यत्वविरहेणसत्प्रतिपक्षनिश्चयप्रतिबन्धकत्वस्य पक्षधर्मिकसाध्यवत्तानिश्चयेविरहान्नोक्तातिव्याप्तिः, सर्वमन्यत् सामान्यलक्षणवदत्राप्यूहनीयं, विशेषणव्यावृत्तिरपिपूर्ववदूहनीये, तिसंक्षेपः॥ इति नैयायिक मैथिल

---

(टि०)(१) आदिपदेनसंयोगेन गुणादिसाध्यकस्थले गुणीयत्वाभाववत्संयोगादेः परिग्रहः।

राज पण्डित श्रीमद्विश्वनाथशर्म्मकृत लक्षणावली प्रकाशे अनुमान प्रकाशः समाप्तः ॥

तत्रोपमितिकरण, मुपमानं, तथाहिकश्चित् पुरुषः गोसदृशोगवय इति वाक्यंश्रुत्वाऽरण्यंजगाम, तत्रगवयंपश्यन्नतिदेशवाक्यार्थंस्मरति, ततश्चगोसदृशोगवयपदवाच्यइत्याकारकप्रत्यक्षज्ञानंभवति, ततोगवयोगवयपदवाच्यइतिबोधस्तस्यभवति, सएवबोधउपमितिः, तत्करणमुपमानं, तच्चातिदेशवाक्यार्थस्मरणं, व्यापारश्चगोसदृशोगवयपदवाच्यइत्याकारकप्रत्यक्षात्मको बोधः, इतिसंक्षेपः ॥ इतिनैयायिकमैथिलराजपण्डितश्रीमद्विश्वनाथशर्म्मकृतलक्षणावलीप्रकाशे उपमान प्रकाशः समाप्तः ॥

आकाङ्क्षायोग्यता ऽऽसत्तितात्पर्यज्ञानपदार्थोपस्थितिव्यापारकपदार्थधर्मिकवृत्तिज्ञानजन्यामितिः शाब्दमितिः, पदज्ञानकरणिकामितिः शाब्दमितिर्वा, प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः, प्रमाणं, तज्जन्यामितिः शाब्दमितिर्वा, ॥ घटः कर्मत्वमानयनं कृतिरितिवाक्यजनितसकालितपदार्थोपस्थितिमूलकमानसबोधेऽतिव्याप्तिवारणायाकाङ्क्षेति, अथवातत्राकाङ्क्षातिरिक्तसकलकारणसत्वेपिशाब्दानुत्पत्त्यान्वयव्यभिचारवारणायाकाङ्क्षेति, वह्निनासिञ्चतीतिवाक्यस्थलेतथाविधदोषनिरासाययोग्यतेत्यस्योपादानं, किंचरूपकस्थलेमुखं चन्द्र इतिवाक्यात् मुखंन चन्द्र इति बाधकालेपदार्थोपास्थितिमूलकाहार्यमानसप्रत्यक्षेऽतिव्याप्तिवारणायतस्योपादानं, विलम्बेनोच्चारिताद् घटामादिपदात् तद्दोषवारणायासत्तीति, सैन्धवमानये त्यादौ, डित्थमानयेत्यादौ; चार्थविशेषप्रमितिसम्पादनायतात्पर्य्येति, घटादिपदसमवायज्ञानजन्याकाशोपस्थितिमूलक

मानसबोधेऽतिव्याप्तिवारणायवृत्तीति ॥ अथगामानयगौरस्ती
त्यादिवाक्यतोऽपिमानसएवबोधोस्त्वितिकिं शब्दस्यप्रमाणा
न्तरत्वस्वीकारेणेतिचेन्न तत्रतत्रगोकर्मकत्वेनानयनंशृणोमि, अ
स्तित्वेनगांशाब्दयामी, त्यनुव्यवसायस्यसर्वानुभाविकत्वात्, वि
षयतासम्बन्धेनप्रत्यक्षं प्रतितादात्म्येनविषयस्य हेतुतयाविष
यस्यशाब्दस्यातिरिक्तस्यास्वीकारेताद्दशानुव्यवसायानुपपत्तिः ॥
केचित्तुगामानयेति वाक्यजन्यमानसबोधस्वीकारेकारणान्तरे
णोपस्थितस्यापिघटदण्डादेः कर्मत्वांशेभानंस्यात्, नचेष्टापत्ति,
रनुभवविरोधात्, घटादिकर्मकत्वेनानयनं शृणोमीत्यनुव्यवसा
यस्यानुदया, दितिप्राहुः ॥ अथानुमितिरेवसाऽस्तु, प्रमित्यन्तर
त्वेमानाभावात्, तथाहिगौरस्तीतिवाक्यश्रवणानन्तरं, गौरस्ति
तावती, अस्तिपदसाकाङ्क्षपदस्मारितत्वात् चक्षुर्वादित्य नुमाना
देवतत्सिद्धि, रितिचेन्नविनष्टचक्षुषिव्यभिचारात्, पक्षेस्मृतिविष
यत्वाज्ञानदशायामपिशाब्दमतेरानुभविकत्वाच्च, शाब्दंप्रतिपद
जन्योपस्थितेरेवकारणतयातद्विषयत्व ज्ञानस्यानावश्यकत्वादिति
दिक् ॥यत्पदार्थेन यस्यानुभावकत्वं भवति,तयो,स्तदा,काङ्क्षा,
तत्पदार्थे, तद्वता, योग्यता, एकपदार्थेऽपरपदार्थबाधविरहरूपे
तिपरमार्थः,वक्तुरिच्छा,तात्पर्यं,पदार्थोपस्थितिव्यापारकस्सम्ब
न्धो,वृत्तिः, साद्विधा, संकेतलक्षणाभेदात्,॥ अथव्यञ्जनावृत्तेरा
वश्यकत्वाद्विधेत्यसङ्गतिः, तथाहिगच्छगच्छसिचेत् कान्तपन्थानः
सन्तुतेशिवाः,। ममापिजन्मतत्रैवभूयाद्यत्रगतोभवानित्यत्र,तवगम
नेममभरणमवश्यभावीत्यस्य, निःशेषच्युतचन्दनंस्तनतटंनिर्मृष्ट
रागोधरो,नेत्रेदूरमनञ्जनेपुलकितातन्वीतवेयंतनुः ॥ मिथ्यावा
दिनिदूतिबान्धवजनस्याज्ञातपीडागमे, वापीं स्नातुमितोगतासिन

पुनस्तस्याधमस्यान्तिकं, मित्यत्रदूतीसम्भोगस्यच, वाचकलक्षक पदयोरभावात्तयोर्बोधानुपपत्त्याव्यञ्जनावृत्तिः स्वीकार्य्येतिचेन्न तत्रतत्रतयोरनुमित्यात्मकस्य मानसादीच्यबोधस्यवाभ्युपगमादे वानुपपत्त्यादिदोषाणामनवकाशाद्व्यंजनावृत्तेरनावश्यकत्वात् , नचबोधद्वयस्वीकाराद्गौरवमितिवाच्यम् भवन्मतेपिशक्त्याज न्मादिपदात् शाब्दबोधानन्तरंव्यंजनावृत्तिज्ञानात् तत्तदर्थोप स्थित्याव्यङ्ग्यार्थबोधोदयेनबोधद्वयस्वीकारस्यावश्यकत्वादिति॥ ननुबोधकतैववृत्तिरस्तु, विलक्षणसंकेतस्यलक्षणायाश्चवृत्तित्वान भ्युपगमात्,द्विधैत्यसङ्गति, रितिचेन्नगङ्गापदंनतीरवाचकं, मपितु तीरसम्बन्धिनीरवाचकमितिधीदशायाङ्गङ्गायांघोषइतिवाक्याव घृतपदंनघृतकर्म्मकभक्षणवाचकमितिज्ञानदशायांच आयुर्वैघृत मित्यादिवाक्याच्च, तीरनिरूपिताधेयतावान्घोषइत्यादिबोधस्य घृतकर्म्मकभक्षणमायुर्ज्जनकमितिबोधस्य चानुभविकत्वात्, लक्ष णायाःवृत्तित्वमावश्यकमिति। शक्तिभ्रमाद्ब्राह्मणाच्छगगरीत्यादि शब्दानामपभ्रंसानांवृक्षमत्स्यघटादिबोधकतयावृक्षमत्स्य घटादि वाचकत्वापत्तेर्वारणायसङ्केतस्यवृत्तित्वमवश्यमङ्गीकार्य्यम्, नचे ष्टापत्ति, रनुभवविरोधात्, साधुत्वापत्तेश्च, नचपुण्यजनकत्वस्यत त्रतत्रासत्वान्नापत्तिरितिवाच्यम् गंगापदंगंगावाचकमिति व त्तीरवाचकमित्यपिव्यवहारःस्या, दतः सङ्केतस्यवृत्तित्वमावश्यक मिति॥ तत्रेदंपदममुमर्थंबोधयत्विति, अस्माच्छब्दादयमर्थोबोद्ध व्यइतीच्छावा,संकेतरूपावृत्तिः। साद्विधा,ईश्वराधुनिकसंकेतभे दात्,तत्राधुनिकसंकेतः, परिभाषा,तयाचार्थबोधकंपदं, पारिभा

(१) (टि॰)१६६पृ.६.पं.प्रकारतानिरूपितत्वं तृतीयार्थः,।

षिकं,यथाशास्त्रकारादिसंकेतितं,वृद्धिरादैच,अदेङ्गुणः,यूस्त्र्याख्यौनदीत्यत्र,वृद्धिगुणाद्यादिपदं,तद्बोध्योर्थः परिभाष्यो,गौणइत्यभिधीयते ॥ ईश्वरसंकेतः शक्ति, स्तयाचार्थबोधकंपदंवाचकं, यथागोत्वादिविशिष्टवाचकंगवादिपदं, तद्बोध्योऽर्थोगवादिर्वाच्यः,सएवमुख्यार्थ,इत्यभिधीयते । वाच्यवाचकादिपदेईश्वरेच्छायाः बोधजनकत्वे(१)नयाविषयतासैवधात्वर्थः, आश्रयत्वंकर्तृप्रत्ययार्थः, विषयत्वंविषयित्वंवाद्वितीयार्थः, पदंगांवक्तिगोर्वाचकमित्यादौगोपदार्थस्यगो, वृत्ति त्वसम्बन्धेन विषयतायामन्वयो, विषयत्वस्य निरूपकत्वसम्बन्धेनधात्वर्थैकदेशबोधेऽन्वयः, धात्वर्थस्यनिरूपितत्वसम्बन्धेनाश्रयत्वेऽन्वय, स्तस्य चस्वरूपसम्बन्धेन कर्तरिपदेऽन्वयः, पदेनगौरुच्यतेपदस्यगौर्वाच्यइत्यादौवृत्तित्वं तृतीयार्थः, प्रकारत्वावच्छिन्नविशेष्यतानिरूपितजनक प्रकारत्वावच्छिन्नविशेष्यतानिरूपितबोधप्रकारत्वावच्छिन्न विशेष्यतानिरूपितविषयित्व सम्बन्धावच्छिन्नप्रकारत्वं, कर्म्मप्रत्ययार्थः पदस्य निरूपितत्वसम्बन्धेन तृतीयार्थेऽन्वय, स्तस्यस्वरूपसम्बन्धेन निरुक्तधात्वर्थेऽन्वयः, धात्वर्थस्यकर्म्मप्रत्ययार्थैकदेशप्रकारत्वेनिरूपितत्वसम्बन्धेनान्वयः, कर्म्मप्रत्ययार्थस्यस्व रूपसम्बन्धेनप्रथमान्तार्थेऽन्वइयइति, । द्वितीयेच्छायाः संकेतरूपत्वेतुईश्वरेच्छायाःजन्यतावद्बोधविषयत्वप्रकारतानिरूपितविशेष्यत्वंधात्वर्थः,सर्वमन्यत्पूर्ववत्स्वयमूह्यं(१)।शक्तिग्रहश्चप्रथमतोव्यवहारा

---

(टि०) (१) पदेन गौरुच्यते इत्यादौ जन्यतावद्बोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वमर्थः, तदेकदेशेजन्यत्वेतृतीयान्तार्थ पदनिरूपितत्वस्यान्वयः, धात्वर्थस्य निरू

र्थंतितत्तोव्याकरणादुपमानात्, कोषात्, आप्तवाक्यात्, वाक्य शेषात्, विवृतितः, सिद्धपदसान्निध्याच, अतएवशक्तिग्रहंव्याक रणोपमानकोषाप्तवाक्यात् व्यवहारतश्च ॥ वाक्यस्यशेषाद्विवृते र्वदन्तिसान्निध्यतः, सिद्धपदस्यवृद्धा, इतिपठन्ति ॥ तथाहिगामा येतिकेनचिन्निपुणेननियुक्तः कश्चनव्युत्पन्नस्तद्वाक्यतोऽर्थंप्रती त्यानयनंकरोति, तच्चोपलभमानोबालः इदंगवानयनंस्वगोचर प्रवृत्तिजन्यंचेष्टात्वात्मदीयस्तनपानव दित्यनुमायगवानयनगो चराप्रवृत्तिःस्वविषयधर्म्मिककार्य्यताज्ञानजन्याप्रवृत्तित्वात् मदी यप्रवृत्तिवदितिप्रवृत्तेर्गवानयनधर्म्मिककार्य्यताज्ञानजन्यत्वं प्रसा ध्य, गवानयनगोचरकार्य्यताज्ञानमसाधरणहेतुकंकार्य्यत्वात्घटव दित्येवमनुमिन्वानः, समुपस्थितत्वात् लाघवाच्च, श्रुतवृद्धवाक्यमे वतदसाधारणत्वेनकल्पयति, तदनन्तरंचगवादिपदानां प्रत्येकमा वापोद्वापेनगवादिबुद्धौ जनकत्वमवगत्यानतिप्रसक्तयेगवादिपद स्यैवतदनुकूलत्वंकल्पयति। पश्चाद्व्याकरणाच्छक्तिग्रहो, यथाकर्म्म णिद्वितीयाकर्त्तरिपरस्मैपदमित्याद्यनुशासनात् कर्म्मत्वादौद्विती यादेः शक्तिग्रहः, क्वचिदुपमानाच्छक्तिग्रहो, यथागवयादिपदश

---

पितत्वसम्बन्धेनकर्म्माख्यातार्था श्रयत्वे ऽन्वयः, आश्रयत्व स्यस्वरूपसम्बन्धेनगोपदार्थेऽन्वयः, गोपदंगांवक्तीत्यत्रतादृश धात्वर्थैकदेशिबोधे द्वितीयान्तार्थं गोविषयकत्वस्यान्वयः, धात्व र्थस्यनिरूपितत्वसम्बन्धेन प्रकारत्वावच्छिन्न विशेष्यतानिरू पित प्रकारत्वावच्छिन्न विशेष्यतानिरूपितप्रकारत्वावच्छिन्न विशेष्यतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्न प्रकारत्वरूप कर्त्राख्यातार्थैकदेशिप्रथम प्रकारत्वे ऽन्वयः, आख्यातार्थस्य स्वरूपसम्बन्धेनगोपदेऽन्वयः. इति भावः।

क्तिर्थीसाचिन्त्येनगोसादृश्यातिदेशवाक्याद्गवयपदवाच्यत्व बोधा नन्तरंगवयत्वजात्यवच्छिन्नेगोसादृश्यग्रहात् गवयोगवयपदवाच्य इत्याकारकइति, क्वचित्कोषाच्छक्तिग्रहो,यथा गुणेशुक्लादयः पुंसिगुणिलिङ्गास्तुतद्वति ॥ शीतंगुणेतद्वदर्थाः सुशीमः शिशिरोजडः ॥ चूर्णेक्षोदः समुत्पिञ्जपिञ्जलौभृशमाकुले, इत्यादिकोषेभ्यः श्वेतादौशुक्लादिपदस्य,क्वचिदाप्तवाक्या,द्यथाश्रोतव्योमन्तव्यइत्यादिश्रुत्याश्रुधातोः शाब्दबोधे,क्वचिद्वाक्यशेषा,द्यथायवपदस्यकङ्गु,प्रभृतौम्लेच्छादीनां दीर्घशूकविशिष्टेच शिष्टानां व्यवहारदर्शनादेकमात्रेशक्तेर्निर्णयाऽसम्भवात् नानार्थत्वस्यान्याय्यत्वात् यवमयश्चरुर्भवतीतिश्रुतौयवपदस्यसन्देहे, वसन्तेसर्वसस्यानांजायतेपत्रशातनं, मोदमानाश्चतिष्ठन्तियवाः कणिशशालिनइति,विध्यर्थाऽकांक्षयावर्तमानवाक्यशेषा,द्दीर्घशूकएवयवपदस्यशक्तिग्रहः, यथावास्वाराज्य कामोऽग्निष्टोमेनयजेतेत्यादिविधिशेषीभूतेभ्यःयन्नदुःखेनसम्भिन्नं नच ग्रस्तमनन्तरम् ॥ अभिलाषोपनीतञ्च (१) तत्सुखं स्वःपदास्पद,मित्यादिवाक्येभ्यःस्वरादिपदस्य, क्वचिद्विवरणादपि, यथापचतिपाकंकरोति,गामानयति गवानयनंकरोती,त्यादौतुल्यार्थकवाक्यात्कृत्यादौतिङादेः,क्वचि

---

(१) (टि॰) दुःखासम्भिन्नत्वञ्च स्वावच्छेदकशरीरावच्छिन्नत्वस्वाव्यवहितोत्तरत्वद्वयसम्बन्धेन दुःखविशिष्टान्यत्वं, अनन्तरदुःखाग्रस्तत्वञ्च स्वावच्छेदकशरीरावच्छिन्नत्व स्वाव्यवहितपूर्वत्वद्वयसम्बन्धेन दुःखविशिष्टान्यत्वं, अभिलाषोपनीतत्वञ्च कामनाप्रयोज्यत्वं, स्वर्गकामनयाकृतस्ययागादेरेवस्वर्गजनकतयाकामनायां तत्प्रयोजकत्वमिति ॥

तद्धेपदर्सान्निध्या, यथानीरूपस्पर्शवान्वायुः, निस्पर्शमूर्तत्वव न्मन,इत्यादौ,रूपरहितस्पर्शवतिवायुपदस्य, स्पर्शरहितमूर्तत्ववतिम नः पदस्य, ॥ प्राचीनमतेवायुत्वजातेः, सर्वमतेमनस्त्वजाते, रती न्द्रियतयास्वरूपतस्तदवच्छिन्न स्यानुपस्थित्यातत्रशक्तिग्रहायो गात्, यथावासत्कृत्यालङ्कृतांकन्यांददानः ककुदः स्मृतइत्यतः कन्यादात्रयादिपुककुदपदस्यशक्तिग्रहइति ॥ यत्तुसहकारतरौम धुरंरौतिपिकइत्यतोमधुररवकर्तरिपिकपदस्यशक्तिग्रह, इति तस्यो दाहरणमिति ॥ ततुच्छं,तिङर्थधर्म्मिणिनामार्थस्याऽनन्वयात्, ला घवाच्चप्रत्यक्षसिद्धकोकिलत्वजात्यवच्छिन्ने शक्तिस्वीकारात् ॥ ननुव्यहारादुक्तरीत्याशक्तिज्ञानेऽपिकार्य्यतावा चिपदस्य त त्साकाङ्क्षपदस्यैववा,शाब्दसमान्यंप्रतिहेतुत्वमवधारितंवाले, रि तिकोषादितस्तेषां शाब्दानुदयात्, कथंकोषादितः शक्तिग्रह इतिचेन्न प्रथमतोलिङादिपदेबोधजनकत्वस्या वधारणेऽपिपश्चा त् पुत्रस्तेजातः, पुत्रीतेगर्भिणीजाता, मारुदः शतंसहस्रंवामधुरं वातवदास्यामी,त्यादिवाक्यश्रवणादतिहर्षान्वितंपुरुषंपश्यन्तआ नन्दजनकस्य शाब्दानुभवातिरिक्तस्याभावात् लिङादिघटित वाक्यस्यापि शाब्दहेतुत्वमवधारयन्तिबालाः, नचतत्रासंसर्गाग्रह मात्रमितिवाच्यं लिङ्गादिघटितवाक्यस्थलइवतत्रापिप्रवृत्तिदर्श नात्, कथमन्यथाप्रतिहारायभूषणवसनादिदानंसंघटत इति, ॥ अथेश्वरसङ्केतस्यशक्तित्व घटपदंघटाविषयकबोधजनकत्वप्रकारक भगवदिच्छावदितिज्ञानस्य,तादृशेच्छीयविशेष्यतावद्धेतिज्ञानस्य, घटपदजन्यबोधविषयत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्य तावान्घटइतिज्ञानस्यवा,घटोपस्थितिद्वाराघटत्वप्रकारकशाब्दंप्रति हेतुत्वंवाच्यं, तच्चभगवद्विद्वेषिणांमीमांसकानांनसम्भवति, तैरी

श्वरानभ्युपगमादितिचेन्न कारणतावच्छेदककोटावीश्वरीयत्व स्यानुपादेयत्वात्, तादृशकारणतामीमांसकानामपिसिद्धा, नच न्यायनयेईश्वरसंकेतस्य सन्मात्रविषयकतयागाछमाछशब्दस्यापि वृक्षमत्स्यवाचकत्वं, साधुत्वञ्च, स्यात्, गाछ्यादिशब्देशक्तिभ्रमे णवृक्षादिबोधजनकत्वस्य विद्यमानतयाभगवदिच्छायांतेषां ते नरूपेणविषयत्वात्, एवंगङ्गादिपदेतीरादिवाचकत्वंस्यात, तीरा दिबोधजनकत्वस्य गङ्गादिपदेसत्वादितिवाच्यं तद्विषयकबोध जनकतात्वावच्छिन्नप्रकारता निरूपितभगवदिच्छाविशेष्यत्वस्य तद्वाचकत्वत्वात्, तथाचगाछपदंवृक्षंबोधयत्वित्याकारकेच्छाया विरहेणातिप्रसङ्गविरहादिति, गंगापदंतीरंबोधयत्वित्याकारक भगवदिच्छाविरहान्नतीरवाचकत्वस्यापत्ति, रेवंतत्पदजन्यबोध विषयतात्वावच्छिन्नप्रकारता निरूपितभगवदिच्छाविशेष्यत्वस्य तद्वाच्यतारूपतयानतीरादौ गंगादिपदवाच्यत्वापत्तिरिति, व स्तुतस्तुतदर्थप्रत्यायनेच्छया भगवदुच्चरितत्वंतद्वाचकत्वं, अपभ्रं शादयोनभगवदुच्चरिता, गङ्गापदञ्चन तीरप्रत्यायनेच्छयाभ गवदुच्चरित, मितिनतत्रतत्तद्वाचकत्वापत्तिरिति, नन्वस्मदा दुच्चरितेगङ्गादिपदेऽव्याप्तिरितिवाच्यं तादृशभगवदुच्चरित वृत्यानुपूर्वीमत्वस्यवाचकत्वत्वात्, नचायुर्व्वैघृतमित्यत्रायुः शब्दे आयुर्ज्जनकवाचकत्वापत्तिः, घृतपदेचघृतकर्म्मकभक्षणवाचकत्वा पत्तिः, तयोर्व्वेदघटकत्वेनतादृशार्थप्रत्यायनेच्छयाभगवदुच्चरि तत्वादितिवाच्यं तदर्थप्रत्यायनेच्छयेत्यस्य तदर्थविषयकत्ववि शिष्टबोधजनकतात्वावच्छिन्न प्रकारताशालीच्छयेत्यर्थपरत्वात्, तत्रायुः पदंबोधजनकंभवतु,बोधश्चायुर्ज्जनकविषयकोभवत्वि,त्या कारकभगवदिच्छाभ्युपगमेनापत्त्यसम्भवात्, अथतथापिआधु

र्कदेवदत्तादिपदेऽव्याप्तिः, द्वादशेऽह्निपितानामकुर्य्यादित्यत्र नामपदस्यदेवदत्तादिपरत्वेऽपि देवदत्तेत्यादिस्वरूपाणां भगवद नुच्चरितत्वादितिचेन्न द्वादशदिवसाधिकरणकपितृकर्तृकसङ्केतस्य पितृकर्तृकत्वेनाधुनिकत्वा,दाधुनिकसङ्केतस्य परिभाषात्वात्, देवदत्तादिपदंनदीवृद्ध्यादिपदवत् पारिभाषिकमेव, तथाचवाचक त्वक्षणस्यालक्ष्यतयातत्राव्याप्तिशङ्काया अप्यभावादिति, किञ्च प्रवाहोनादिमानेषनविजात्येकशक्तिमान् ॥ तत्वेयत्नवता भाव्यमन्वयव्यतिरेकयो,रित्यनेनकुसुमाञ्जनिप्रबन्धेस्वयमेवसंसार प्रवाहस्यानादित्वाभिधानात्, सादिपदस्यालीकत्वादव्याप्तिशङ्कैवनावतीति, ॥ अन्वयतात्पर्य्ययोरन्यतरानुपपत्तिपूर्व्विकालक्षणा भवति, तत्राद्यागङ्गायांघोषइत्यादौ,द्वितीयायष्टीः प्रवेशयेत्यादौ, प्रसिद्धा, साचजहत्स्वार्थाजहत्स्वार्थ निरूढाधुनिकगौणीलक्षित लक्षणाभेदादनेकविधा, तत्राद्यास्वशक्यतानवच्छेदकरूपेणस्वा शक्यबोधिका, गङ्गायांघोषइत्यादौतीरत्वप्रकारेणतीरबोधिका, द्वितीयाचस्वशक्यतानवच्छेदकरूपेण स्वाशक्यस्वशक्योभयबोधिका, क्षत्रिणोयान्तीत्यादौ क्षत्रधरतद्भिन्नगतबहुत्वप्रकारेण क्षत्रधरतद्भिन्नबोधिका, अनुमितिकारणीभूताभावप्रतियोगियथार्थ ज्ञानविषयत्व मित्यत्रप्रकृतपक्षसाध्य हेतुकानुमितिनिष्ठकार्य्यता निरूपकसम्बन्धित्वेनानुमिति तत्कारणबोधिकाच, तृतीयाचा नादितात्पर्य्यमूलिका, नीलोघटइत्यादौनीलप्रकारेणनीलबोधिका, चतुर्थीचघटस्तन्तुजन्यइत्यादौपटत्वप्रकारेणपटबोधिका, पञ्चमीचसादृश्यप्रकारेणसदृशबोधिका,सिंहोमाणवकइत्यादौ,(१)

---

(१) (टि॰) अत्रसिंहपदस्य सिंहसदृशेलक्षणेति,।

अपराअरविन्दमकरन्दलुब्धोगुञ्जतिद्विरेफइत्यत्र, स्थातुंगन्तुंद्रुमपिसखंनैवशक्तोद्विरेफ,इत्यादौ,द्विरेफबोध्यभ्रमरबोधिकेति, ॥ मीमांसकास्तुज्ञानेपदानांशक्ति, र्न्वर्थे, तद्वाचकत्वञ्चतज्ज्ञानशक्तत्वं, तच्चतद्विषयकत्वावच्छिन्नशाब्दधीजनकतावच्छेदकधर्म्मवत्वं, सचधर्म्मोवह्न्यादिनिष्ठदाहानुकूलशक्तिवत्पदार्थान्तरमेव, एतावान्विशेषो,दाहानुकूलाशक्तिर्ज्ञातापिकार्य्यानूका,एषाज्ञातैवकार्य्यानुकूला,लाक्षणिकञ्चनानुभावक,मितिनतत्रशक्तिः, घटपदसमभिव्याहृतपदार्थनिष्ठविषयकत्वंनघटपदशक्तिजन्यतावच्छेदकं, तस्यपदान्तरनिष्ठशक्त्यवच्छिन्नजनकतानिरूपितजन्यतावच्छेदकत्वादितिनघटादिपदेपदान्तरार्थवाचकत्वापत्तिः, (१) मितिमातृविषयकत्वमपि न घटादिपदजन्यतावच्छेदकं,तस्यज्ञानसामग्रीप्रयोज्यत्वात्, ॥ अथघटविषयकत्वस्यप्रत्यक्षसाधारणत्वेनातिप्रशक्ततयाजन्यतानवच्छेदकत्वात् तदवच्छिन्नकार्य्यत्वाप्रसिद्ध्याऽसम्भवइतिचेन्न घटादिविषयकत्वस्यातिप्रशक्तत्वेऽपि घटविषयकत्वशाब्दत्वोभयस्यानतिप्रसक्तत्वात्तदुभयस्यैवकार्य्यतावच्छेदकत्वेन तदवच्छिन्नकार्य्यत्वस्यलक्षणेनिवेशात्, नचघटपदजन्यकलसपदजन्यबोधयोः परस्परव्यभिचारेणकारणानन्तर्य्यस्य कार्य्यतावच्छेदककोटावश्यं प्रवेशनीयतयाप्रयोजना

---

(१) (टि०) तद्विषयशाब्दधीजनक तावच्छेदकधर्म्मवत्त्वं ; तद्वाचकत्वस्य सदाकधर्म्मत्व विषयकघटमानयेति वाक्यजन्यबोधनिष्टाम्पदनिष्ठशक्त्यवच्छिन्नजनकतानिरूपितजन्यतामादाय घटपदस्यकर्म्मत्व वाचकत्वंस्यादतस्तद्विषयकत्वावच्छिन्नत्वस्य शाब्दनिष्ठजन्यतायां निवेशइतिभावः, ।

र्वेन विषयस्यतत्रानिवेशात् तद्विषयकत्वावच्छिन्नकार्य्यत्वा प्रसिद्धिरितिवाच्यम् घटकलसादिपदानामेकरूपेण घटविष यकशाब्दानुकूलशक्तिमत्वेनैव कारणत्वान्नव्यभिचारः, नच तथापिलक्षणाग्रहेणशक्तिभ्रमाद्वा पटपदजन्यघटादिबोधेव्यभि चारइतिवाच्यमेतन्मतेलाक्षणिकस्याननुभावकत्वा, दन्यथारूया त्यनभ्युपगमाच्च, ॥ अथतद्विषयकशाब्दानुकूलशक्तिमत्वेन पदस्य हेतुत्वेभावीभूतपदज्ञानाच्छाब्दानुपपत्ति, स्तयोः शा ब्दप्रागविद्यमानत्वात्, कारणस्यकार्य्याव्यवहितप्राक्क्षणसत्वनि यमादितिचेन्नैतन्मतेपदानांनित्यत्वात्, नचशाब्दधाराप्रसङ्गइति वाच्यम् ज्ञानविषयतापन्नशक्तिमत्वेनपदस्यहेतुत्वात्, नचपुरुषा न्तरीयज्ञानदशायां पुरुषान्तरस्यशाब्दप्रसङ्गइतिवाच्यम् तत्पुरुषी यत्वस्यतत्रतत्रनिवेशात्, नचशब्दस्याकाशधर्म्मत्वाच्छाब्दहेतुत्वंक थमितिवाच्यम् कालिकविशेषणतया कार्य्यकारणभावाभ्युपग मात् कार्य्यकारणयोः सामानाधिकरण्यसम्भवात्, ॥ अस्तुवात ज्ज्ञानशक्त्यातस्यतद्वाचकत्वम्, तथाचघटविषयकशाब्दम्प्रतिघट विषयकशाब्दानुकूलशक्तिमत्वेनघटपदज्ञानानांहेतुत्वात्, कार्य्य कारणयोर्म्मातृनिष्ठत्वात्, तयोर्वैयधिकरण्याभावेः, अथात्रतद्वाच कत्वंयदितद्विषयशाब्दानुकूलशक्तिमज्ज्ञानविषयत्वं, तर्हिघटविष यकशाब्दानु कूलशक्तिमद्घटमानयेतिवाक्यज्ञानविषयत्वस्यामा दिपदेसत्वेनामादिपदेघटवाचकत्वापत्तिः, नचतद्विषयकशाब्दानु कूलशक्तिव्यापकाविषयितानिरूपकत्वस्यतद्वाचकत्वत्वा, दमादिप दविषयितायां निरुक्तव्यापकत्वाभावेनापत्तिविरहादितिवाच्यं ज्ञानभेदेनाविषयितायाःभेदपक्षेचासम्भवप्रसंगादितिचेन्नत्वनिरू पकतावच्छेदकानुपूर्व्यवच्छिन्ननिरूपितविषयितासम्बन्धेनव्या

पकत्वविवक्षणादसम्भवविरहात्, नचघटाविषयकशाब्दानुकूलश क्तिमत्वस्य घटपदज्ञानइवकलशपदज्ञानेऽपिसत्वेनतत्रघटपदवि षयकत्वस्यविरहेणासम्भवस्तदवस्थएवेतिवाच्यं तद्विषयकशा ब्दानुकूलशक्तिर्य्यद्रूपावच्छिन्न निरूपितविषयिताव्यापिकात द्रूपवत्वस्यतद्वाचकत्वात्, न चघटपदाविषयकत्वस्यानुमितावपि सत्वेनतत्रशक्त्यभावादसम्भवस्तदवस्थएवेतिवाच्यं तत्रापितच्छ क्तिस्वीकारा,त्कथमन्यथान्यायनये भावीभूतपदज्ञानाच्छाब्दबो ध, स्तयोस्तत्रश्रावणप्रत्यक्षाभावात्, ॥ (१) वस्तुतस्तुद्विषय कशाब्दानुकूलशक्तिव्यापकस्वावच्छिन्नविषयिताकरूपवत्वंतत्, व्यापकताच स्वरूपस्वनिरूपकपदार्थकपदनिरूपितविषयित्वान्य तरसम्बंधेन, सम्बंधघटकस्वपदंविषयितापरं, स्वावच्छिन्नेत्य त्रस्वपदंघटपदत्वादिपर, मितिघटपदकलशपदयोरानुपूर्वीभेदे ऽपिनक्षतिः, पदद्वयेघटार्थकत्वस्यसत्वादितिवदन्ति, ॥ त च्चिन्त्यम्, शक्यार्थोपस्थितिद्वाराशक्तपदस्येवलक्ष्यार्थो प स्थितिद्वारालक्षकस्याप्यनुभावकत्वात्, शक्तपदस्यानुभावकत्वं लक्षकपदस्याननुभावकत्वमित्यत्रविनगमकस्यादर्शनात्, गामा नयेत्यादाविवरजतादिपरकद्रव्यपदघटित द्रव्यमानयेत्यादावपि रजतानयनादौप्रवृत्तिदर्शनात्, नहिसामान्यधर्मावच्छिन्नवाच कपदस्यविशेषधर्मावच्छिन्नेशक्ति, रपितुलक्षणैवे, तिसामान्य धर्मावच्छिन्नवाचकद्रव्यपदस्य रजतत्वादिविशिष्टानुभावकतया,

---

(१) (टि०) वासुदेवविषयकशाब्दानुकूलशक्तेरकार घटितघटपदविषयिताव्यापकत्वेन घटपदस्यवासुदेववाचकत्वं स्यादतआहवस्तुवस्त्विति ।

वर्जेतत्वावच्छिन्नवाचकत्वापत्तिः नचलाक्षणिकपदघटितवा क्यघटकशक्तपदस्यैव स्वार्थस्यैवस्वार्थान्वितलक्ष्यार्थस्यानुभावक त्वस्वीकारात् लाक्षणिकस्योपस्थापकत्वेप्यननुभावकत्वापत्ति रितिवाच्यम् तत्रैवतद्वाचकत्वापत्तेः, नचोपस्थापकत्वेसत्यनुभाव कत्वस्य तद्वाचकत्वत्वानापत्तिरितिवाच्यं शक्तपदाघटितधूमादि त्यादौ, नीलविशिष्टपरनीलपदघटितान्नीलादित्यादौच, धूमादिप दस्यधूमज्ञाने,पञ्चम्याश्चज्ञाप्ये,लाक्षणिकतयातत्रगत्यभावात्, नचलक्ष्यार्थस्यशाब्दबोधेनप्रवेशः, समभिव्याहृतपदार्थेउपस्थित स्यतस्यासंसर्गाग्रहमात्रंफलमितिवाच्यं विनिगमकस्यदुर्लभत्वात्, तदुपरागेणशृणोमीत्यनुव्यवसायानुपपत्तेश्च,नचेष्टापत्तिः विधेयो परागेणैवतथाप्रत्ययात्,नविधौपरः(१)शब्दार्थइतिजैमिनिसिद्धा न्ता,दितिवाच्यम् मञ्चाःक्रोशन्तीत्यादौ, यष्टीःप्रवेशयेत्यादौच, पूर्वाननुभूतस्यमञ्चस्थस्ययष्टिधरस्यचस्मरणासम्भवात्, स्मृत्यनुभव योःसमानविषयकत्वेनकार्यकारणभावात्, नचानुपस्थितस्यकथं शाब्देभानं,कारणीभूतायाः उपस्थितेरभावादितिवाच्यं समानप्र कारकत्वेनकार्यकारणभावमभ्युपगच्छतां मीमांसकानांयोग्यता बलेनापूर्वस्यभानमिवनिरुक्तलक्ष्यार्थस्यापि समानधर्म्मप्रकारेणो पस्थितिसहकृतयोग्यताबलेनभानसंभवादिति,॥ किञ्चनिराकां क्षवाक्यजन्यशाब्दबोधवारणाय तत्तदर्थान्विततत्तदर्थविषयकशा ब्दबोधंप्रतितत्तत्पदसाकांक्षतत्तत्पदत्वेन हेतुत्वस्यावश्यंवक्तव्य

---

(१) (टि॰) अत्रविधिपदंविधेयितापरं, निरूपकत्वं स प्तम्यर्थः। परः, शक्यभिन्नः, तथाचशक्यभिन्नः शब्दार्थो, नवि धेयितानिरूपकः, लक्ष्यार्थोनविधेयोभवतोतिफलितार्थः,॥

तयातद्विषयकशाब्दानुकूलशक्तिमत्वेनपदस्य, तज्ज्ञानस्यवा, प
तायां,मानाभावात्, गौरवप्रसंगाच्चे, त्यन्यत्रविस्तरः ॥

मू० । संयोगासमवेतसंयोगासमवा
यिसमवेतवत्कर्म, तच्चपञ्चविधं, उत्क्षे
पणादिभेदेन, तत्राधोदेशविभागोर्ध्वदे
शसंयोगजनकंकर्म, उत्क्षेपणं, उर्ध्वदेश
विभागोऽधोदेशसंयोगजनकंकर्म, अप
क्षेपणं, अग्रदेशविभागमूलदेशसंयोग
जनकंकर्म, आकुञ्चनं, मूलदेशविभागा
ग्रदेशसंयोगजनकंकर्म, प्रसारणं, उत्क्षे
पणाद्याकुञ्चनञ्चप्रयत्नजमिष्टं, नचेत्,
गमनस्यापिप्रसङ्गात्, अप्रयत्नजंकर्म
गमनम् ॥ ननुपञ्चैवकर्माणीतिनोपप
द्यते, भ्रमणादीनां सत्वादितिचेन्न भ्रम
णादयोगमनविशेषा, इत्युक्तंशास्त्रकृद्भि
रिति ॥

कर्मनिरूपयति संयोगासमवेतेति, संयोगत्वंगुणत्वं स
त्तांचादायसंयोगादावतिव्याप्तिवारणायसंयोगासमवेतेति, चर

ननु तावन्तोत्क्षेपणं, द्रव्यत्वादिकमादायातिव्याप्तिवारणाय संयोगा समवायिसमवेतेति, संयोगासमवायिक्रियासमवेतक्रियात्वजा तिमादाय लक्षणसमन्वयः । वस्तुतस्तु संयोगासमवेतोत्क्षेपणाप क्षेपणसमवेतवत्कर्म, तेनोत्क्षेपणत्वादिकमादायानेकत्वापत्त्यादि दोषाणामनवकाशः, उत्क्षेपणत्वेऽपक्षेपणवृत्तित्वविरहात्, क्रिया त्वेचोभयसमवेतत्वस्य सत्वात् तमादाय लक्षणसमन्वयः, यद्वासं योगासमवायिसमवेतप्रत्यक्षजातिमत्वे सति संयोगभेदवत्कर्मे त्युक्तौ नोक्तदोषाणामवकाश इति, (१) क्रियात्वजातिश्च प्रत्यक्षसि द्धा, क्वचिदप्यनुपलब्धिविरहात् ॥

मू० । समवेतरहितसर्वान्योन्याभा व समानाधिकरणंसमवेतंसामान्यम् ॥

कर्म विभजते तच्चेति, तत्, कर्म, पञ्चविधं, पञ्चप्र कारकमित्यर्थः, आदिपदेनोत्क्षेपणापक्षेपणाकुञ्चनप्रसारणग मनादीनांपरिग्रहः, इदानींप्रत्येकमुत्क्षेपणादिकंनिरूपयाति तत्रेति, तत्र, तेषुमध्ये, अन्यत्स्पष्टम्, गमनभेदमुत्क्षेपणादौ दर्शयति उत्क्षेपणापक्षेपणेति, नन्वेतावतागमनस्य कथंवारणं, गमन स्यापितद्रूपत्वादित्यतआह प्रयत्नेति, इष्ट, मभिप्रेतमित्यर्थः, तथाचगमनंनप्रयत्नजन्य, मन्यथा रथोगच्छतीतिवाक्यस्यायोग्यत्व प्रसंगात्, रथस्याचेतनत्वादिति, गमनंनप्रयत्नजन्यमुत्क्षेपणा

(१) (टि०) गुणत्वस्य सत्वस्य चाप्रत्यक्षत्वान्नतमादाया तिव्याप्तिरितिभावः ॥

दिकन्तुप्रयत्नजन्यमिति प्रयत्नजाप्रयत्नजभेदेनगमनभेदस्या
पणादौसत्वान्नगमनस्यतत्स्वरूपत्वमितिभावः ॥ लोष्ट्रमुत्क्षिप
तिदेवदत्तइत्यत्राधोदेशविभागजनकोर्ध्वदेशसंयोग जनकव्यापा
रजनकप्रयत्नः, क्षिपधात्वर्थः लोष्ट्रपदोत्तरद्वितीयाविभक्ते
र्वृत्तित्वमर्थः, तस्यव्यापारेऽन्वयः, लोष्ट्रस्यद्वितीयार्थवृत्तित्वे
ऽन्वयः, धात्वर्थस्याख्यातार्थाश्रयत्वे, आश्रयत्वस्यचैत्रेऽन्वयः,
एवंचाधोदेशविभागजनकोर्ध्वदेशसंयोगजनकलोष्ट्र निरूपित
वृत्तितावद्व्यापारजनकप्रयत्नवान् देवदत्तइतिशाब्दबोधः ॥
कर्मण: पूर्वोक्तपञ्चविधत्वमाक्षिपातिनन्विति, भ्रमणादीनामि
त्यत्रादिपदेनरेचनस्यन्दनोर्ध्वज्वलनतिर्य्यग्गमनानांपरिग्रहः, त
थाचदशधाभिद्यते कर्मेत्येववक्तुमुचितं, पञ्चैवेत्यसंगत, मि
तिभावः ॥ समाधत्तेभ्रमणाद्योगमनविशेषाइति, तथाचगमनम
ध्येभ्रमाणादीनामंतर्भावान्नपञ्चैवेत्यसंगतिरिति ॥ ननुभ्रम
णादीनांविनिगमकाभावात्प्रयत्नजन्यतया गमनानन्तर्भाव इति
चेन्नभ्रमतिचक्रं, वायोर्भ्रमणं, भ्रमतिवायु, रित्याद्यचेतनेप्रयोगद
र्शनात् तेषामप्रयत्नजत्वात् ॥ अत्रप्राचीनानांसम्मतिमाह इत्यु
क्तामित्यादिना ॥ स्वाश्रयविभागपूर्वकोर्ध्वदेशसंयोगजनक कर्मत्व
मुत्क्षेपणत्वं, अभिघातजन्यत्वेसत्यधोदेशसंयोगजनककर्मत्वमपक्षे
पणत्वं, अविनश्यद्द्रव्यान्योन्यावयवाभिमुखसंयोगजनककर्म
त्वमाकुञ्चनत्वं,अविनश्यद्द्रव्यान्योन्यावयवानभिमुखभूयोदेशा
भिमुखसंयोगजनककर्मत्वंप्रसारणत्वं, एतच्चतुष्टयकर्मान्यकर्मत्वं
गमनत्वं,अतएवभ्रमणादीनांगमनेऽन्तर्भावेशइतिभावः, ॥ (१)

---

( १ ) ( टि० ) रूपत्वेऽतिव्याप्तिवारणाय नित्यावृत्तीति,

दिविनोदेशंकरमिश्रास्तु नित्यावृत्तिविभुवृत्त्यवृत्तिपृथिवीमा त्रवृत्त्यवृत्तिजातिःकर्मत्वं, तद्योग्यंकर्म, इत्याहुः ॥ सामान्यं निरूपयतिसमवेतेति, संयोगेद्वित्वादौचातिव्याप्तिनिरासायरहितान्तं, समवेतविशेषणं, विशेषेऽतिव्याप्तिवारणायसर्वेति, (१) तथाचविशेषस्यैकव्यक्तिमात्रवृत्तित्वेन सर्वान्योन्याभावसामानाधिकरण्यविरहान्नातिव्याप्तितिरिभावः। समवाये, अभावेचा, तिव्याप्तिवारणायसमवेतेति, तयोरसमवेतत्वान्नातिव्याप्तिरितिभावः,वस्तुतस्तुसमवेतपदं, सर्वान्योन्याभावसामानाधिकरण्यघटकवृत्तितायांसमवायसम्बन्धावच्छिन्नत्वलाभार्थक,मतोनतद्वैयर्थ्यशंकावकाशः, अन्यथासमवायेनान्योन्याभावसामानाधिकरण्यस्य विशेषव्यावृत्त्यर्थमवश्यंवक्तव्यतयातेनैवाभावसमवाययोर्व्यावृत्तिसंभवात्समवेतपदस्यवैयर्थ्यप्रसङ्गइति॥ केचित्तुनित्यमनेकसमवेतं सामान्यमित्याहुः, तच्चिन्त्यम्, नित्यत्वस्यगुरुशरीरतयागौरवप्रसङ्गात्,विभुद्वयसंयोगस्वीकारेसंयोगेऽतिव्याप्तेश्च,॥तच्चसामान्यंद्वि

---

संयोगत्ववारणाय विभुवृत्त्यवृत्तीति गन्धत्वतिक्तत्वनीलत्वादिवारणाय पृथिवीमात्रवृत्त्यवृत्तीति, पृथिवीत्वभिन्नावच्छेदकत्वे सतिपृथिवीतरवृत्तितावच्छेदकत्वंतदर्थः, परत्वापरत्ववेगत्ववारणायतत्तद्भिन्नत्वस्य जातौनिवेश, इतिभावः॥

(१) (टि०) सर्वान्योन्याभाव सामानाधिकरण्यञ्चोभयावृत्तिधर्मावच्छिन्न प्रतियोगिताकभेदत्वव्यापकत्वं, व्यापकताचसामानाधिकरण्यसम्बन्धेनेति॥

विधं, परमपरंच, द्रव्यादित्रिकवृत्तिसत्ता, परसामान्यपदेनोच्यते, सत्ताभिन्नद्रव्यत्वादिजाति, रपरसामान्यशब्देनोच्यते, अयंविशेषःसत्तापरैव, घटत्वादिकमपरमेव, द्रव्यत्वादिकंतुपरमपरञ्चेति, ननुपरत्वापरत्वयोर्विरुद्धत्वात्तयोरेकत्रकथंसमावेशइतिचेन्ना पेक्षिकयोर्द्वयोरविरोधित्वात्, यदपेक्षयायस्यव्यापकत्वंतदपेक्षयातथ्यपरत्वं, यदपेक्षयायस्यव्याप्यत्वंतदपेक्षयातस्यापरत्व, मित्यंचसत्तासकलजात्यपेक्षयाव्यापिकेतिपरैव,द्रव्यत्वादिकजातिस्तुपृथिवीत्वापेक्षयाव्यापिकेतिपृथिवीत्वापेक्षयापरा,सत्ताऽपेक्षयाव्याप्येतिसत्तापेक्षयाऽपरा, घटत्वादिजातिश्चनकस्यापेक्षयाव्यापिकेतिसाऽपरैवेति ॥ अथात्रसौगताः स्वलक्षणमेवपरमार्थंमन्यमाना, नाकृतिसद्भावमनुमन्यंते, तथाहिपृथक्त्वेव्यक्तितोजातिर्दृश्यते पृथगेवसा, अभेदेव्यक्तिमात्रंस्याद्द्विधाचेन्नविरोधतः ॥ नहिसैवततोऽन्याऽनन्याचसम्भवति, विरुद्धत्वादभेदभेदयोः,यदिचभिन्नाजातिः स्तदासासर्वगताव्यक्तिष्वेववा,नतावत्सर्वगतत्व,मन्यत्रानुपलब्धेः, व्यक्तौचे, व्यक्तावुत्पन्नायांतस्मिन्देशेप्रागसतीकथंतस्यामुपलभ्यते,नचतत्रोत्पद्यते,नित्यायाउत्पत्त्ययोगात्,नचव्यक्त्यन्तरादागच्छति, अमूर्तत्वात्, तस्मिंश्चव्यक्त्यन्तरेऽनुपलब्धिप्रसंगात्, नचांशेनागता, अंशेनचतत्रैवास्थितेतिशक्यंवक्तुं,निरंशत्वात्, एवंव्यक्तिनाशेनचतत्रैवपश्चादवस्थितानुपलभ्यासापिविनशिष्यति, न चान्यत्रयाति,अमूर्तत्वात् ,व्यक्त्यन्तरेचपूर्वमेवावस्थिताजाति, रितिपुनःप्रवेशाद्द्विगुणोपलभ्येत,यथाहुः नयातिनचतत्रासीदस्तिपश्चान्नचांशवत्,जहातिपूर्वंनाधारमहोव्यसनसन्ततिः, । व्यक्तौचवर्तमाना यद्येकस्यांव्यक्तौकार्त्स्न्येनवर्तेत, तदाव्यक्त्यन्तरेपुनस्यात्, नह्येकासतियुगपदनेकत्रकार्त्स्न्येनवर्तितुंशक्नोति, नचावयवतोव

र्त्ति, निरवयवत्वात्, कथंचनानाविधास्वतीतानागतवर्तमानासु व्यक्तिष्ववयवतोवृत्तिः संभाव्येत, व्यक्तौचवर्तमाने, इहप्रत्ययमनुभवेत्, नचेहगोत्वमितिकस्यचित्प्रतीतिरस्ती, त्याहु, स्तत्र, जातिर्व्यक्तिभिन्नैव, उपलब्धिश्चतस्याः व्यक्तिद्वारैव, यथारसालादिमाधुर्य्यादेरसालद्वारैवोपलब्धि, र्नतुस्वातन्त्र्येण, तथाजातेरपिव्यक्तिद्वाराव्यक्तावेवोपलब्धिः, नचगुणगुणिनोरभेदइतिवाच्यम् रसालमाधुर्य्यादेश्चाक्षुषत्वापत्तेः, रसालाभेदात्, तस्मात्तद्गतधर्मस्य तद्द्वारेणैवतत्रोपलब्धि, र्नान्यत्रे, त्यवश्यंवक्तव्यं, वक्तव्यश्चगुणगुणिनोः क्रियाक्रियावतोः जातिव्यक्त्योश्चभेदइति, घटस्यरूपं, चैत्रस्यज्ञानं, चैत्रस्यक्रिये, तिवत्, घटत्वंघटः, घटोरूपं, ज्ञानंचैत्रः, क्रियाचैत्र, इत्यादिप्रत्ययव्यासत्वात्, एवञ्चजातिर्नोत्पद्यते, नगच्छति, नायाति, नित्यत्वात्, अमूर्त्तत्वात्, विभुत्वाच्च, व्यक्तेः संस्थानस्यचजात्यभिव्यञ्जकत्वा, दुत्पन्नघटेघटत्वंज्ञायतइति, ॥ अतएवाकृतिग्रहणाजातिरितिफणिनायदुक्तं, तदपिसाधुसंगच्छते, आकृतिग्रहणेत्यस्याकृतिज्ञानजन्यज्ञानविषयेत्यर्थः, किञ्चोपदेशात् घटैकज्ञानेजातेष्युपदेशान्तरंविनाघटान्तरज्ञानंनस्यात्, व्यवहारलोपप्रसंगाच्चे, तिघटत्वमवश्यमभ्युपगन्तव्यं, तथाचघटत्वसामान्यलक्षणप्रत्यासत्त्यानिखिलघटज्ञानं प्रथमघटज्ञानानन्तरमुत्पद्यतइतिनव्यवहारलोपावसरः, किञ्चायंघटइत्यादिप्रत्ययानामनुगताकारत्वं विषयस्यानुगतत्वंविनाकथंसंभवति, विषयानुगमंविनाप्रतीतेरनुगतत्वासंभवात्, सचानुगतोविषयो, घटत्वमेवे, त्यन्यत्र विस्तरः॥ गगनत्वादिकन्तुनजाति, र्व्यक्तेरभेदात्, तथाचोक्त, माचार्यै, र्व्यक्तेरभेदस्तुल्यत्वं, संकरोऽथानवस्थितिः, रूपहानिरसंबन्धोजातिबाधकसंग्रह इति, व्यक्तेरभेदइति, व्यक्ते, राश्रयस्या, भे

द, एकत्वं, तथाचवस्तुविशिष्टत्वंजातिबाधकं, वस्तुवैशिष्ट्यञ्च स्ववृत्तित्वस्वभिन्नावृत्तित्वो भयसंबन्धेन, स्वंवस्तुपरं, अथवा अभेद, स्वतादात्म्यं, तच्चा, साधारणोधर्मः, असाधारणत्वञ्चै, कमात्रवृत्तित्वं, एकमात्रवृत्तित्वञ्च स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टंयत्र, तत्तद्भेदकूटवत्वं, जातिबाधकमिति,तुल्यत्वं,परस्परव्यापकत्वं, तथाचघटत्वकलसत्वोभयंनजाति, स्तुल्यत्वात्, संकरश्च, परस्परात्यन्ताभावसमानाधिकरणत्वे सत्येकाधिकरणवृत्तित्वं, जातिविशिष्टत्वमितिफलितम्, वैशिष्ट्यञ्चस्वसामानाधिकरण्यस्वाभाववद्वृत्तित्वस्वसमानाधिकरणभेद प्रतियोगितावच्छेदकत्वैतत्त्रितयसंबन्धेन, स्वंजातिः, स्वसामानाधिकरण्यस्यानिवेशेगुणत्ववैशिष्ट्यस्य द्रव्यत्वपृथिवीत्वादौ सत्वंनतेषांजातित्वानुपपत्तिःस्या, दतस्तन्निवेशः, नचतदुपादानेपि कालिकेनगुणत्वाधिकरणे घटादौतेषांसत्वादुक्तदोषस्तदवस्थएवेतिवाच्यं समवायेनस्वाधिकरणत्वस्य विवक्षितत्वात्, समवायेनघटादौगुणत्वस्यासत्वात्,नचतथापिगुणत्वाधिकरणंजन्यगुणेकालिकेनद्रव्यत्वादेः सत्वेनोक्तदोषावारणमितिवाच्यं समवायेनस्वाधिकरणेसमवायेनवृत्तित्वस्य विवक्षितत्वात्, द्रव्यत्वगुणत्वादौसत्ताविशिष्टत्ववारणाय द्वितीयसंबन्धप्रवेशः, तथाचसत्ताभाववतिद्रव्यत्वादेरसत्वेन सत्तावैशिष्ट्यस्यतत्रासंभवात्, नचकालिकेन सत्ताभाववतिमहाकालादौ द्रव्यत्वादेः सत्वादितिवाच्यं स्वरूपसंबन्धेन स्वाभाववत्वस्य विवक्षितत्वात्, नचसंयोगेनसत्ताभावस्य केवलान्वयितयातद्वति द्रव्यत्वादेः सत्वंनिराबाधमितिवाच्यं व्यधिकरणसंबन्धावच्छिन्नत्वस्य प्रतियोगितायांमानाभावात्, ननुतथापिकालिकसंम्ब

द्र्व्यावोच्छिन्न प्रतियोगिताकसत्ताभावसामानाधिकरण्यस्य (१) द्रव्यत्वेसत्वादुक्तदोषस्तदवस्थएवेतिचेन्न ; समवायसंबन्धावच्छिन्नप्रतियोगिताकत्वस्य स्वाभावेप्रवेशान्नदोषइति, नचसमवायकालिकोभयसंबन्धावच्छिन्न प्रतियोगिताकसत्ताभाववतिनित्यद्रव्ये द्रव्यत्वस्यसत्वेनोक्तदोपावारणमितिवाच्यं समवायसंसर्गमात्रावच्छिन्नत्वस्यप्रतियोगितायांविवक्षितत्वात्, अथसत्त्वगगनोभयाभावस्यापिसत्ताप्रतियोगिकतयातद्वतिघटादौद्रव्यत्वादेः सत्वेनोक्तदोपावारणमितिचेन्नस्वेतरावृत्तित्वस्य, स्ववृत्त्युभयावृत्तिधर्मावच्छिन्नत्वस्यवा, प्रतियोगितायांविवक्षणान्नदोषइति, नचद्रव्यत्वाभाववत्यांक्रियायां कालिकेनघटत्वपृथिवीत्वादेःसत्वेन द्रव्यत्वनिरूपितसांकर्य्यस्य घटत्वादौप्रसंगइतिवाच्यं समवायेनस्वाभाववद्वृत्तित्वस्यविवक्षितत्वात्, क्रियादौसमवायेनघटत्वादेरसत्वान्नदोषइति, सत्ताद्रव्यत्वादौघटत्वादिनिरूपितसांकर्य वारणायतृतीयसंबन्धस्यनिवेशः, भेदश्चवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्न समवायमात्रावच्छिन्नावच्छेदकताकप्रतियोगिताको ग्राह्य, स्तेनोभयवद्भेदविशिष्टवद्भेदोभयसंसर्गाद्यवच्छिन्नावच्छेदकताकप्रतियोगिताकभेदमादाय नदोषावकाशइति, वस्तुतस्तुएकत्ववृत्तिसमवायत्व गतैकत्ववृत्तिप्रतियोगिताकोभेदोग्राह्यः, प्रथमवृत्तित्वंच प्रतियोगितायांस्वावच्छेदकतात्वावच्छिन्न पर्याप्त्यनुयोगितावच्छेदकत्व स्वनिरूपकानुयोगितानिरूपित निरूपकतावच्छेदकतात्वावच्छिन्न पर्याप्त्यनुयोगितावच्छेदकत्वोभ

---

(१) (टि०) आकाशान्तर्भावेण सामानाधिकरण्यं बोध्यं ॥

यसंबन्धेन, द्वितीयवृत्तित्वंच स्वनिरूपितावच्छेदकतानिरूप- संसर्गतावच्छेदकतात्वावच्छिन्नपर्याप्त्य नुयोगितावच्छेदकत्व सं बन्धेन, स्वभेदीयप्रतियोगितेति, भूतत्वमूर्तत्वोभयन्नजातिः सांक र्यात्, भूतत्वाभाववतिमनसिमूर्त्तत्वस्य, मूर्तत्वाभाववत्याकाशेभूत त्वस्य, पृथिव्यादौतदुभयस्य, समावेशात्, सांकर्य्यम् ॥ अथभूतत्वा देर्ज्जातित्वाभावेनजातिविशिष्टत्वस्य मूर्तत्वादौविरहेणसांकर्यस्या सत्वात् कथंभूतत्वादौसांकर्यं, किंचपशुत्वंनजातिः पृथिवीत्वादि नासांकर्यादित्यप्यसंगतम्, पशुत्वस्यजातित्वाभावपक्षेऽखण्डोपा धित्वे (१) नासमवेतत्वात्, नत्रसंकरानवकाशादितिचेन्न समवा यस्वरूपान्यतरसम्बन्धेन सामानाधिकरण्यादेर्विवक्षितत्वा, दख ण्डोपाधौस्वरूपेण सामानाधिकरण्यस्याक्षतत्वात्, जातिविशि ष्टत्वमित्यनेन चजातित्वेनाभिलविशिष्टत्वस्य, संयोगविभागसंख्या न्यविशिष्टत्वस्यवा, विवक्षितत्वात्, भूतत्वादेरपिग्रहणसम्भवान्न संकरानुपपत्त्यवकाशः, वैशिष्ट्यंचपूर्वोक्तात्रितयसम्बन्धेन, अन्य तरत्वेन, त्रित्वेनच, संसर्गत्वानभ्युपगमे, त्वगतिरेव ॥ वस्तुतस्तुपृथि त्वनिरूपितसंकरश्च, पृथिवीत्वसामानाधिकरण्यपृथिवीत्वाभाव वद्वृत्तित्वपृथिवीवृत्तिभेद प्रतियोगितावच्छेदकास्वैतत्त्रितय वत्वम्, एवंतेजस्त्वभूतत्वादिनिरूपितसंकरापिबोध्यः, नचसां कर्यस्य नानात्वापत्तिरितिवाच्यमिष्टत्वात्, व्याप्त्यादेरिवसांक र्यस्य नानात्वाभ्युपगमात्, तथाचपशुत्वंनजातिः तेजस्त्वादि निरूपितसांकर्यात्, नचवैपरीत्येविनिगमकाभावइतिवाच्यम्

---

(१) (टि०) अखण्डोपाधित्वंच समवायभिन्नत्वमति स्वरूपसम्बन्धेन वृत्तित्वे सतिभावत्वं, ॥

द्र्मीणान्तरेणपृथिवीत्वतेजस्त्वादिजातिसिद्धौ तत्जातिनिरू पितसंकरस्याभात् , इदंत्वत्र ध्यातव्यम्, उच्चैःश्रवात्मकाश्वेतेजस उपष्टम्भस्वीकारेतत्रपार्थिवत्वेनसंकरानवकाशात् पशुत्वजातिरिवे, तिसंक्षेपः ॥ सामान्यत्वंनजातिः अनवस्थानात, अयंभावः सामान्यत्वस्यजातित्वे सामान्यत्वस्यापिसामान्य शब्दवाच्यता, तथाच सामान्यत्वात्मकसामान्येपुनः सामान्यत्व, मितिसामान्य त्वस्य कियत्पर्यन्तं स्थिति, रित्यनियमः, एवंचसामान्यत्वं यदि सामान्यंस्यात्तर्हिसामान्यवृत्तिनस्यात् सत्तात्र, दिति सामान्य त्वेसामान्यवृत्तित्वविरहेण मूलच्छेदकरीत्वनवस्थाबोध्या, अथवा आपाद्याभावेनापादकाभावसिद्धौ सामान्यत्वेसामान्यत्वस्यास त्वेनसामान्यभेदसम्पादिकाऽनवस्थाबोध्येति ॥ विशेषत्वंनजा तिः रूपहानितः, अयंभावः, तस्यजातित्वेविशेषस्यस्वतोव्यावर्त्त कत्वस्वभावहानिःस्यात्, जातेस्तद्व्यावर्तकत्वात् ॥ समवायोनजा तिः सम्बन्धाभावात्, समवायसम्बन्धाभावात्, समवायसम्बंधे नसमवायस्याऽसत्वादित्यर्थ, इतिदिक् ॥

**मू० । समवेतवत्वरहिताः सर्वान्यो न्याभाव समानाधिकरणत्वरहिताःसम वेताः विशेषाः ॥ नित्यसम्बन्धः सम वायः, समवेतत्वरहितसर्वान्योन्याभाव स मानाधिकरणभावोवा ॥**

विशेषंनिरूपसति समवेतवत्त्वेति, तद्रूपतद्रसादावतिव्या प्तिवारणाय समवेतवत्त्वरहिताइति, चरमसमवेतविशेषणं, सामा

न्यादावतिव्याप्तिवारणाय सर्वान्योन्याभावसमानाधिकरणत्वर हिताइति,(१) समवायाभावादावतिव्याप्तिव्युदासायसमवेताइ ति, वेशेषेआनन्त्यसूचनायबहुवचनस्योपादानम्, अथविशेषेमा नाभावइतिचेन्न घटादीनांद्व्यणुकपर्यन्तानामवयवभेदाद्भेदः पर माणूनामवयवाभावेन परस्परभेदाऽन्यथानुपपत्त्यातत्कल्पनस्याव श्यकत्वात्, नचपरमाणुभेदकस्यासत्वेक्षतिविरहइतिवाच्यम् घ टारम्भकपरमाणुतः पटारम्भकपरमाणोरवैलक्षण्येन घटपटयोर्वै लक्षण्यानुपपत्तिः, कारणवैलक्षण्यंविनाकार्यवैलक्षण्यादर्शनात्, नचपरमाणावेवव्यावर्तकत्वमस्तु, किंविशेषकल्पनेनेतिवाच्यम् पार्थिवपरमाणुर्नस्वतोव्यावर्त्तकोरूपवत्वात् घटवदित्यनेन, परमा णुर्नस्वतोव्यावर्त्तकः स्पर्शवत्वात् घटवदित्यनेनच, तद्बाधात्, पर माणुत्वंनजातिः पृथिवीत्वादिनासाङ्कर्यात्, नचपृथिवीत्वव्या प्यंजलत्वव्याप्यंनानैवजातिरस्त्वितिवाच्य मणुपरिमाणात्मक गुणेनैवतत्प्रतीत्यादुपपत्तेर्जातिकल्पनेमानाभावात्, सकलपर माणावनुगतजातिं विनापार्थिवादिपरमाणावन्तान्तरजातेरनुभ वेनाविषयीकरणाच्चेति ॥ समवायंदर्शयतिनित्येति, संयोगादि वारणाय नित्येति, द्रव्यत्वादिवारणायसम्बन्धेति, ननुविभुद्वयसं योगस्वीकारेत्वगतिरित्यतआह समवेतत्वरहितेति, द्रव्यादिविशे षेष्वतिव्याप्तिवारणाय (२) समवेतत्वरहितेति, नित्यद्रव्यव्या

---

(१) (टि॰) वस्तुविशिष्टान्यत्वंतदर्थः, वैशिष्ट्यञ्चस्ववृत्ति त्व स्वभिन्नवृत्तित्वो भयसम्बन्धेनेति ।

(२) (टि॰) घटादेरसंयोगादौ घटत्वादावतिव्याप्तिवा रणायेत्यर्थः ।

वृत्तयेसर्वान्योन्याभाव समानाधिकरणेति, अभावव्यावृत्त्यर्थं भावेति, ननुसमवेतत्वरहितत्वं समवायघटितमित्यन्योन्याश्रयइतिचेन्न तस्यद्रव्यगुणसामान्यभिन्नार्थकत्वात्, केचित्तु सत्ताशून्यत्वेसतिसामान्यभिन्नत्वम् तस्यार्थइत्याहुः, परेतुवाकारोऽनास्थायामित्याहुः ॥ अथसमवायेमानाभावइतिचेन्न गुणक्रियादिविशिष्टबुद्धिः विशेषणविशेष्य सम्बन्धविषयाविशिष्टबुद्धित्वात् दण्डीपुरुषइतिविशिष्टबुद्धिवदित्यनुमानेन संयोगतादात्म्यादीनांबाधात्समवायसिद्धिः, नचस्वरूपसम्बन्धमादायैवानुमानचारितार्थ्यमस्तु, तथाचार्थान्तरं,सिद्धसाधनंवा,स्यादितिवाच्यमनेकस्वरूपाणां द्रव्याद्यनुयोगिकत्वगुणादिप्रतियोगिकत्वकल्पनापेक्षयैकस्मिन् समवायएवतत्कल्पनस्योचितत्वात् लाघवा, दिति नार्थान्तरं, नवासिद्धसाधनं, नचसमवायस्यैकत्वेवायौरूपवत्ताधीः प्रमास्यात् रूपसम्बन्धस्यसत्वादितिवाच्यं सम्बन्धमात्रस्यविशिष्टबुद्ध्यनियामकत्वात्, सम्बन्धिसम्बन्धोभयसत्वस्य विशिष्टबुद्धिनियामकत्वात्, वायौरूपस्याभावेनतस्याःप्रमात्वायोगात्, परंतुविशिष्टबुद्धौविशेषणप्रतियोगिकत्वे विशेष्यानुयोगिकत्वावच्छेद्यत्वं नियमतोभासते, तथाचसमवायनिष्ठरूपप्रतियोगिकत्वेवाय्वाद्यनुयोगिकत्वावच्छेद्यत्वा नभ्युपगमान्निरुक्तबुद्धौ तस्यभानेनभ्रमत्वानपायादिति ॥ इतिभावनिरूपणंविभागश्च ।

मू० । नञर्थप्रत्ययविषयोऽभावः स चतुर्धाभिद्यते,प्रागभावः प्रध्वंसाभावोऽन्योन्याभावोऽत्यन्ताभावश्चेति ॥ उ

त्तरकालावधिरभावः प्रागभावः, पूर्वका लावधिरभावः प्रध्वंसाभावः, तादात्म्य सम्बन्धावच्छिन्न प्रतियोगिताकाभावो न्योन्याभावः, उभयावधिरहितस्संसर्गा भावोऽत्यन्ताभावः ॥ तर्काम्बरोङ्क प्रमितेष्वतीतेषुशकान्ततः ॥ वर्षेषूदयन श्चक्रेसुबोधांलक्षणावलीम् ॥ १ ॥ विद्यासन्ध्योदयोद्रेकादविद्यारजनीक्षये ॥ यदुदेतिनमस्तस्मैकस्मैचितुविश्वतस्त्वि षे ॥ २ ॥ इतिमहामहोपाध्यायन्याया चार्य्यपदाङ्कित श्रीमदुदयनविरचिता लक्षणावली समाप्ता ॥

अभावंनिरूपयतिनञर्थेति, नञर्थस्यप्रत्ययइत्यत्रविषयि त्वंषष्ठ्यर्थः, तत्रनिरूपितत्वसम्बन्धेन नञर्थान्वयः, षष्ठ्यर्थस्य स्वरूपसम्बन्धेनप्रत्ययेऽन्वयः, तथाच नञर्थनिरूपितविषयिता विशिष्टप्रत्ययनिरूपितविषयताऽऽश्रयो, ऽभाव, इतिफलिता र्थः, नञर्थोऽभावइत्येवास्तु लाघवादितिवाच्यमभावत्वेऽति व्याप्ते, स्वस्यापिनञर्थत्वात्, जात्याकृतिव्यक्तयः पदार्थइतिम तेपदार्थतावच्छेदकेपदार्थत्वदर्शनात्, ननुनञर्थप्रत्ययविषयत्व

स्यापि तत्राक्षतत्वादितिचेन्न प्रतियोगित्वसम्बन्धावच्छिन्ना, ऽनुयोगित्वसम्बन्धावच्छिन्नावा, याप्रकारता, तन्निरूपितनञ् पदप्रयोज्यविशेष्यताश्रयो, ऽभाव, इत्यस्यनिष्कृष्टार्थत्वादिति ॥ अभावंविभजतेसचेति, स, अभाव, इत्यर्थः ॥ प्रागभावंनिरू पयतिउत्तरेति, ॥ध्वंसाभावंनिरूपयतिपूर्वेति, ॥ अन्योन्याभा वंनिरूपयतितादात्म्येति, नञाऽन्योन्याभावबोधने·प्रतियोगिवा चकपदसमान विभक्तिकानुयोगिवाचकपदसमभिव्याहारस्यतन्त्र त्वंबोध्यम्, ॥ (१) अत्यन्ताभावंनिरूपयतिउभयेति, उभयपदमुत्त रकालपूर्वकालोभयपरं, प्रागभावध्वंसयोर्व्यावृत्त्यर्थमुभयावधि रहितस्योपादानं, भेदव्युदासायसंसर्गाभावस्योपादानं, नित्य संसर्गाभावो, ऽत्यन्ताभाव, इतियावत्, संसर्गाभावत्वंच संस र्गारोपजन्यप्रतीतिविषयाभावत्वम्, संसर्गश्चतादात्म्यातिरिक्तो ग्राह्य, स्तेनभेदव्युदासः, उत्तरकालसम्बंधावच्छिन्नप्रतियोगि ताकः, प्रागभावः, पूर्वकालसम्बन्धावच्छिन्नप्रतियोगिताको, ध्वंस, इतितयोःसंग्रहः, ननुजन्यत्वं जनकताप्रतियोगित्वं, ज नकत्वञ्च, कार्य्याव्यवहितप्राक्क्षणावच्छेदेनकार्यसमानाधिक रणात्यन्ताभावाप्रतियोगित्वं, पुनश्चात्राभावत्वं किमितिरीत्या चक्रकादिप्रसङ्गइतिचेन्न भेदभिन्नाभावस्यसंसर्गाभावत्वात्, । भेदश्चतादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावोयदिकथ्य ते, तदातादात्म्यंचस्ववृत्त्यसाधारणोधर्मः, असाधारणत्वञ्चै, कमात्रवृत्तित्व, मेकमात्रवृत्तित्वञ्च स्वसामानाधिकरण्यस्वप्रति

---

(१) (टि॰) तेनघटवतिभूतलेघटोनेतिवाक्यस्य नप्रा माण्यमिति ।

योगिवृत्तित्वोभयसम्बंधेन भेदविशिष्टंयदयत्तत्तदन्यत्वं, पुन श्चात्रभेदत्वंकिमितिरीत्याचक्रकप्रसंग, इतिभेदत्वमनुयोगितावि शेषो, नतुतादात्म्यसंबंधावच्छिन्नप्रतियोगिताकाभावत्व, मि त्यदोषः ॥ केचित्तुप्रतियोगिविनाश्यभावत्वं, प्रागभावत्वं, । जन्याभावत्वं, ध्वंसत्वं, । अथप्रागभावेमानाभावइतिचेन्नघटो भविष्यतीतिप्रतीतेरेवमानत्वात्, न चोत्तरकालोत्पत्तिकघटवि षयकत्वेनैव तत्प्रतीतेरुपपत्तिरितिवाच्यम् यत्रानिष्टक्रिययापापो त्पत्तिः, कतिपयकालानंतरंगोदानादिरूपप्रायश्चित्तात् तत्पाप स्यनाश, स्तत्रप्रायश्चित्तात्प्राग, स्यदुःखंभविष्यतीतिप्रत्ययोजा यते,तस्योत्तरकालोत्पत्तिकदुःखविषयाभावेन निर्विषयकत्वप्रस ङ्गात्, किञ्चकपालेघटोत्पत्त्यनन्तरं घटांतरोत्पादप्रसङ्गात्, का रणस्यसत्वात्, नचविद्यमानघटस्यघटांतरोत्पत्तिप्रतिवन्धकत्वा न्नापत्तिप्रसंगइतिवाच्यम् विद्यमानघटस्यप्रतिबन्धकत्वं, तदभाव स्यप्रतिवन्धकाभावविधयाकारणत्व, मेतदपेक्षयाप्रागभावस्वीका रपक्षस्यैवलघुत्वात्, प्रागभावविरहेणातिप्रसंगविरहा, दित्यन्यत्र विस्तरइति, ॥ ध्वंसेचघटोध्वस्तः, घटोनष्ट, इत्यादिप्रत्यक्ष स्यैवप्रमाणत्वा, न्नकोपिविवादइति, ॥ नञाप्रातिपदिकार्थप्रति योगिकात्यन्ताभावबोधने, अनुयोगिवाचकपदोत्तरसप्तम्यास्त न्त्रत्वम्, (१) आख्यातार्थप्रतियोग्यत्यंताभावबोधने, अनुयोगि वाचकपदस्यप्रथमांतत्वमपेक्षितम्,(२) चैत्रोनपचतीत्यत्रचैत्रेपाक

(१) (टि०) तेनघटे घटोनेति वाक्यस्यनप्रामाण्य मिति।

(२) टि०) तेनचैत्रेनपचतीतिवाक्यस्यनप्रामाण्यमिति।

कृत्यभावबोधनात्, ॥ अथात्यन्ताभावस्यनित्यत्वे भूतलेघटानय नांतरमपिघटोनास्तीतिप्रत्ययः प्रमास्यात्, घटाभावस्यतत्रसत्वा, त्तस्यचनित्यत्वा, दितिचे, दत्रकेचित् तत्रोत्पत्तिविनाशशालीपञ्च मोऽभावोविषयः, द्रव्येगुणत्वंनास्ति, गुणेद्रव्यत्वंनास्ति, रूपे रसत्वंनास्ति, गुडेतिक्तत्वंनास्ती, त्यादावेवनित्यात्यंताभावोवि षय, इत्याहुः ॥ वस्तुतस्तुतत्तात्कालीनतत्तत्भूतलादीनामभाव सम्बन्धतयाघटकालस्य घटाभावसम्बंधाघटकत्वात्, घटकाले घटोनास्तीतिप्रत्ययस्याप्रामाणिकत्वात्, विशेषणताविशेषस्यात्य न्ताभाव सम्बन्धस्यानित्यत्वानेकत्वस्वीकारात् प्रकृतेनतथाप्र त्ययप्रसङ्गः, द्रव्यादौगुणत्वाभावसम्बन्धस्यैकत्वनित्यत्वाभ्युपग मा,न्नकोपिदोषः, प्राचांमतेप्रतियोगिताव, ध्वंसप्रागभावाधिक रणेनात्यन्ताभावः, ध्वंसप्रागभावेनापिसमंतस्यविरोधात्, श्याम घटेरक्तोनास्तीति प्रत्ययोरक्तप्रागभावमवगाहते, रक्तघटेश्या मोनास्तीति प्रत्ययश्चश्यामध्वंसमवगाहते, ॥ नव्यास्तुतत्रविरो धेमानाभावात्, श्यामदशावच्छेदेन रक्तात्यन्ताभावो, रक्तता दशावच्छेदेनश्यामात्यन्ताभावो, वर्ततएवा, न्यथाऽन्तराश्यामे रक्तरूपंनास्तीतिप्रत्ययोयदिरक्तरूपध्वंसमवगाहते तदाऽन्तरा रक्तेरक्तरूपंनास्तीति प्रत्ययप्रसङ्गःस्यात्, पूर्वरक्तध्वंसस्योत्तर रक्तरूपप्रागभावस्यविद्यमानत्वात्, अत्यन्ताभावाविरोधित्वपक्षे च विद्यमानरक्तस्यविरोधित्वान्नात्यन्ताभावस्यतत्रप्रत्ययप्रसंगः, यदिचरक्तत्वावच्छिन्न प्रतियोगिताकध्वंसएवतत्रविषयः, श्या यतादशायांविद्यमानरक्तध्वंसेरक्तत्वावच्छिन्न प्रतियोगिताकत्व मभ्युपेयते, रक्ततादशायांविद्यमानरक्तध्वंसेरक्तत्वावच्छिन्नप्र तियोगिताकत्वंनाभ्युपेयते, तस्याव्याप्यवृत्तित्वा, दित्युच्यते

तदाध्वंसीयप्रतियोगितायां सामान्यधर्मावच्छिन्नत्वेमानाभावा
द्र रक्तत्वावच्छिन्नप्रतियोगिताकध्वंसा प्रसिद्ध्यातस्यतथावि
धप्रत्ययविषयत्वासंभवात्, नव्यनयेचप्रतिवध्यप्रतिबन्धकभावा
न्यथानुपपत्त्याऽत्यन्ताभाव प्रतियोगितायां सामान्यधर्म्माव
च्छिन्नत्वस्यावश्यकत्वात्, अथाऽन्तराश्यामेरक्तंरूपंनास्तीतिप्रत्य
यो, यावन्तिरक्तरूपाणितत्तद्व्यक्तित्वेतरधर्म्मानवच्छिन्नतत्तद्व्य
क्तिनिष्ठप्रतियोगिता काभावकूटमवगाहते, ( १ ) एवंसत्यन्त
रारक्तेरक्तंरूपंनास्तीति प्रत्ययस्यनप्रसङ्गावकाशः, ( २ ) वि
द्यमानरक्तरूपस्यैकस्याप्यभावस्यतदानीयसम्भवा, दितिप्राची
नमतंपिनकोपिदोप इतिचन्नरक्तंरूपमस्तीतिबुद्धौरक्तंरूपन्नास्ती
तिनिश्चयस्यप्रतिबन्धकत्वेमहागौरव, मसर्वज्ञस्यतावद्रूपाणांतत्तद्व्य
क्तित्वेन ज्ञानासम्भवेनतथाविधाभावकूटज्ञानस्यचासम्भवेनता
द्रूप्येणप्रतिबन्धकत्वस्य वक्तुमशक्यत्वाच्च, ( ३ ) ॥ अथाभा
वस्याधिकरणात्मकत्वमेवास्तु, किमतिरिक्ताभावकल्पनेनेतिचेन्ना

---

( १ ) ( टि० ) रक्तरूपत्वव्यापककूट त्वावच्छिन्नाधिकर
णत्वंतत्प्रतीतिविषयः । व्यापकताचस्वसमानाधिकरणोभया
वृत्तिवैशिष्ट्यावच्छिन्ननिरूपकता निरूपकानुयोगित्वानिरूपि
तप्रतियोगिता विशिष्टप्रतियोगितावत्वसम्बन्धेन, प्रतियो
गितावैशिष्ट्यञ्च स्वतादात्म्यस्वसमानाधिकरणधर्म्मेतरधर्म्मान
वच्छिन्नत्वोभयसम्बन्धेनेतिभावः ॥

( २ ) ( टि० ) अभेदसम्बन्धावच्छिन्नप्रकारत्वा प्रयोजकगुण
वाचकशुक्लादिशब्दस्यैवपुंस्त्वमितिरक्तंरूपमित्युपपत्तिरिति ॥

( ३ ) ( टि० ) एवमन्तराश्यामेसमवायेन रक्तरूपंनास्ती
ति प्रत्ययप्रमात्वानुरोधेना विरोधित्वंमन्तव्यमिति ॥

नेकाधिकरणेऽभावत्व कल्पनाऽपेक्षयाऽतिरिक्ताभावकल्पनस्यै वोचितत्वात्, लाघवा, दतएवाधिकरणाभावयोराधाराधेय भा वोप्युपपद्यते, ऽन्यथाऽऽकाशादिवृत्तिघटत्वाभावस्या काशस्वरू पतयातस्यावृत्तित्वेनाकाशे घटत्वाभावइतिप्रत्ययानुपपत्तिः, रस निष्ठरूपत्वाभावस्य रसरूपतयारसेरसस्याभावेन रसेरूपत्वाभा वइत्यादिप्रत्ययानुपपत्तिश्च, एवंगन्धाभावादेरधिकरणस्वरूपत याधिकरणस्यपुष्पादेः रूपरसादेश्चघ्राणाग्राह्यतयागन्धाद्यभावा नां घ्राणग्राह्यत्वानुपपत्तिः, एतेनकालज्ञानस्वरूपत्वमभावस्ये तिपक्षं, स्वदूरपराहतं, कालादेर्घ्राणग्राह्यत्वाद्यभावेनगन्धाभावा दीनां घ्राणग्राह्यत्वाद्यनुपपत्तेरिति, ॥ अभावप्रत्यक्षेसन्निकर्षव, द्योग्यानुपलब्धेरपिकारणत्वंबोध्यं, तेननातीन्द्रियप्रतियोगिका भावस्यप्रत्यक्षत्वं, योग्यानुपलब्धेरभावात्, योग्यताचात्रप्रति योगिसत्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा, तथाचा, त्रय दिघटःस्या, त्तर्हुपलभ्येत, यतोनोपलभ्यते, ऽतोत्रघटोना स्ती, तिप्रतीत्याघटाभावस्यप्रत्यक्षत्व, मेवमत्रयदिमनस्त्वंस्या, त्तर्हुपलभ्येते,त्याद्यापादनासम्भवा,दतीन्द्रियप्रतियोगिकाभा वानामप्रत्यक्षत्व, मितिसंक्षेपः ॥

आसीत्सोदरपूरमूलमहिया ग्रामेभ वानीपति, *र्य्योब्रह्मैकविचारनिर्म्मलम तिःख्यातोऽखिलैःसद्गुणैः ॥ तत्पुत्रो मतिमद्वरोऽखिलगुणप्रख्याततारापति,

* भवानोपति, भंवानीदत्तनाम्ना प्रसिद्ध, आसीत् ॥

स्तारानाथ विभूषणाङ्घ्रियुगलक्षीरोत्थ सत्षट्पदः ॥ १ ॥ तत्सूनुरेतं मिथिलामही शस्याज्ञामवाप्यौदयनीप्रकाशम् ॥ श्री विश्वनाथःकृतवान् प्रयत्नान्मुदेबुधानां विमलप्रकाशम् ॥ २ ॥

इति मैथिलराजपण्डित नैयायिकवरोपा ध्यायोपनामक श्रीमद्विश्वनाथशर्म्म कृतो लक्षणावलीप्रकाशः समाप्तः ॥

---

नरोनवंशाम्बुधि पूर्णचन्द्रस्तर्कादिसिन्ध्वौक्त तसेतुरेकः ॥ आसीत्प्रसिद्धोभवनाथनामा यत्कीर्त्तिरद्यापिवितिष्ठमाना ॥ १ ॥

तत्सूनुरायत्तभवोतिभव्यः श्रीमित्रनाथोऽनु पमप्रभावः ॥ तत्सूनुरीशानविचारशुद्धस्वा न्तोमहीनाथइवेन्दुभूषः ॥ २ ॥

तत्सूनुरत्रौदयनीप्रकाशे श्रीलोकनाथः स्वगु
रुप्रणीते ॥ अचीकरत्कष्टतरस्थलस्यसुवि
वृत्तिंकामहरस्यपुर्य्याम् ॥ ३ ॥

शरवियत्गजचन्द्रमितेशके मधुसितेनवमी
विधुवासरे ॥ उदयनस्यकृतेर्विमलप्रकाश
कमसूंकृतवान्खलुमद्गुरुः ॥ ४ ॥

---

इति गङ्गौलीग्रामनिवासि नैयायिकश्रोत्रि
योपाध्यायोपनामक श्रीलोकनाथशर्म्म
कृता विषयस्थलटिप्पणी समाप्ता ॥

---



# सूचिपत्रम् ।




मूल्य भेजने का पता—

काशी ढुण्डिराज गणेश ।

नै० श्रीसङ्गमलाल झा के मकान पर

श्रीशिवनन्दन झा ।

अथवा—काशी मीरघाट महारानी कोठा

श्रीनन्दकिशोर झा ।

